# अथ शुक्लयजुर्वेदमाध्यंदिनीयसंहिताप्रारंभः ॥

मूल्यं ३ रूप्यकत्रयम् ।

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीवेदपुरुषायनमः ॥
गणनाथसरस्वतीरविशुक्रबृहस्पतीन् ॥ पंचैतान् संस्मरन्नित्यं वेद
वाणीं प्रवर्तयेत् ॥ अथानुवाकसूत्रम् ॥ इषेत्वैका, वसोःपवित्रंतिस्रो,
ऽग्नेव्रतपतेसप्त, पवित्रेस्थोद्वे, शर्म्मासितिस्रो, धृष्टिरसिशर्म्मासि
द्विकौ, देवस्यत्वातिस्रो, देवस्यत्वापंच, प्रत्युष्टꣳरक्षास्तिस्रो, दशै
कत्रिꣳशत् ॥ हरिःॐइषेत्त्वा ॥ इषेत्त्वोर्ज्जेत्त्वाव्वायवस्त्थदेवोवः
सवितापार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्प्यायद्ध्वमग्घ्न्याऽइन्द्राय

भागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनईशतमाघशꣳसोध्रुवा
ऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ [ १ ]
वसोःपवित्रम् ॥ वसोःपवित्रमसिद्यौरसिपृथिव्यसिमातरिश्वनो
घर्म्मोसिविश्वधाऽअसि ॥ परमेणधाम्नादृꣳहस्वमाह्वार्म्मातेय
ज्ञपतिर्ह्वार्षीत् ॥ २ ॥ वसोःपवित्रम् ॥ वसोःपवित्रमसिशतधारं
वसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रे
णशतधारेणसुप्वाकामधुक्षः ॥ ३ ॥ साविश्वायुः ॥ साविश्वा

युꣳसाविश्वकर्म्मासिविश्वधायाः ॥ इन्द्रस्यत्त्वाभागꣳसोमेना
तनच्मिविष्ण्णोहव्यꣳरक्ष ॥ ४ ॥ [ २ ] अग्नेव्रतपते । व्रतञ्चरि
ष्यामितच्छकेयन्तन्मेराध्यताम् ॥ इदमहमनृतात्सत्यमुपैमि
॥ ५ ॥ कस्त्वा । युनक्तिसत्त्वायुनक्तिकस्मैत्वायुनक्तितस्मैत्वा
युनक्ति ॥ कर्म्मणेवांवेषायवाम् ॥ ६ ॥ प्रत्युष्टꣳरक्षः ॥ प्रत्युष्टꣳर
क्षꣳप्रत्युष्टाऽअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः ॥ उर्वन्तरि
क्षमन्वेमि ॥ ७ ॥ धूरसि । धूर्वधूर्वन्तंधूर्वतंय्योस्मान्धूर्वतितंधूं

व्वयंव्वयन्धूर्व्वामः ॥ देवानांमसिवह्नितमꣳसस्नितमम्पप्रितमञ्जुष्टं
तमन्देवहूतंमम् ॥ ८ ॥ अन्हुतमसि । हविर्द्धानन्दृꣳहस्वमाह्वाम्मा
तेयज्ञपंतिर्ह्वार्षीत् ॥ विष्णुंस्त्वाक्रमतामुरुवातायापंहतꣳरक्षो
यच्छंन्ताम्पञ्च ॥ ९ ॥ देवस्यंत्वा । सवितुःप्प्रंसवेश्विनोर्बाहुब्भ्यां
म्पूष्णोहस्ताभ्याम् ॥ अग्नयेजुष्टंङ्गृह्णाम्यग्नीषोमाभ्याञ्जुष्टंङ्गृ
ह्णामि ॥ १० ॥ भूतायंत्वा ॥ भूतायंत्वानारांतयेस्वरभिविक्ख्येष
न्दृꣳहंन्तान्दुर्य्याःपृथिव्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौ

सादयाम्म्यदित्याऽउपस्त्थेग्ग्नेहव्व्यꣳरक्ष ॥ ११ ॥ [ ७ ] पवित्त्रे
स्त्थः ॥ पवित्त्रेस्त्थोवैष्ण्णव्यौसवितुर्व्वः प्रसवऽउत्पुनाम्म्यच्छिद्द्रेण
पवित्त्रेणसूर्य्यस्यरश्म्मिभिः ॥ देवीरापोऽअग्ग्रेगुवोऽअग्ग्रेपुवोग्ग्र
ऽइममद्ययज्ञन्नयताग्ग्रेयज्ञपतिꣳसुधातुँय्यज्ञपतिन्देवयुवम् ॥ १२ ॥
युष्म्माइन्द्द्रः ॥ युष्म्माऽइन्द्द्रोवृणीतवृत्त्रतूर्य्येयूयमिन्द्द्रमवृणीद्ध्वं
वृत्त्रतूर्य्येप्प्रोक्षितास्त्थ ॥ अग्ग्नयेत्त्वाजुष्टम्म्प्रोक्षाम्म्यग्ग्नीषोमा
भ्यान्त्वाजुष्टम्प्रोक्षामि ॥ दैव्व्यायकर्म्मणेशुन्धद्ध्वन्देवयज्ज्यायैय

॥ ३ ॥ द्ध्रोशुंद्धाःपराजग्मुरिदंवस्तच्छुन्धामि ॥ १३ ॥ [ २ ] शर्म्मा ॥ १ ॥
सि॥ शर्म्मास्यवंधूतह्रक्षोवंधूताऽअरांतयोदिंत्यास्त्वगंसिप्प्रतित्त्वा
दिंतिर्वेत्तु ॥ अद्रिंरसिवानस्प्पत्योग्रावांसिपृथुबुंध्नःप्प्रतित्वादित्या
स्त्वग्ग्वेंत्तु ॥ १४ ॥ अग्नेस्तुनूः ॥ अग्नेस्तुनूरंसिवाचोविसर्ज्जंन
न्देववीतयेत्वागृह्णामिबृहद्ग्रांवासिवानस्प्पत्त्यःसऽइदन्देवेभ्योह
विःशंमीष्ष्वसुशमिंशमीष्ष्व ॥ हविंष्कृदेहिहविंष्कृदेहि ॥ १५ ॥ ॥ ३ ॥
कुक्कुटोंसि॥ कुक्कुटोसिमधुंजिह्वऽइषमूर्ज्जमावंदत्वयांव्वयःसंङ्घातः

संङ्घातन्तेम्मम वर्षवृद्धमसिप्प्रतित्त्वावर्षवृद्धंवेत्तुपरापूतहरक्षःपरापू
ताऽअरातयोपहतहरक्षोव्वायुर्वोव्विविनक्तुदेवोवःसविताहिरण्यपा
णिःप्प्रतिगृभ्णात्वच्छिद्रेणपाणिना ॥ १६ ॥ [ ३ ] धृष्टिरसि ॥
धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहिनिष्क्रव्यादꣳसेधादेवयजंव्वह ॥
ध्रुवमसिपृथिवीन्दृꣳहब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामि
भ्रातृव्यस्यवधाय ॥ १७ ॥ अग्नेब्रह्म । गृभ्णीष्वधरुणमस्यन्त
रिक्षन्दृꣳहब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्य

व्वधायं॥ धर्त्रमसिदिवन्दृꣳहब्रह्मवनित्त्वाक्षत्रवनिसजातवन्न्युपदं
धामिभ्रातृंव्यस्यव्वधायं॥ विश्वाभ्यस्त्वाशाभ्यऽउपदधामिचि
तंस्त्थोर्द्धचितोभृगूणामाङ्गिरसान्तपसातप्यद्ध्वम्॥ १८॥[२]शर्म्मा
सि॥ शर्म्मास्यवधूतꣳरक्षोवधूताऽअरातयोदित्यास्त्वगसिप्रतित्वा
दितिर्वेत्तु॥ धिषणासिपर्व्वतीप्रतित्वादित्यास्त्वग्वेत्तुदिवस्कम्भ
नीरसिधिषणासिपार्व्वतेयीप्रतित्वापर्व्वतीवेत्तुधान्न्यमसि ॥ १९ ॥
धान्न्यमसि। धिनुहिदेवान्प्राणायत्त्वोदानायत्वाव्यानायत्वा ॥

दीर्घामनुप्प्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्रति
गृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ २० ॥ [३]
देवस्यत्वा । सवितुः प्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥
संवपामिसमापऽओषधीभिः समोषधयोरसेन ॥ सᳪ रेवतीर्ज्जगती
भिः पृच्यन्ताᳪ सम्मधुमतीर्म्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥
जनयत्त्यैत्त्वा ॥ जनयत्त्यैत्त्वासंय्यौमीदमग्नेरिदमग्नीषोमयो
रिषेत्वाघर्म्मोसिविश्वायुरुरुप्प्रथाऽउरुप्प्रथस्वोरुतेयज्ञपतिः प्प्रथ

तामग्ग्निष्ट्वचर्म्माहिᳬसीद्देवस्त्वासविताश्श्रपयतुवर्षिष्ठेधिनाके
॥ २२ ॥ माभेः ॥ माभेर्म्मासंविक्क्थाऽअतमेरुर्यज्ञोतमेरुर्यज
मानस्यप्प्रजाभूयात्त्रितायत्वाद्वितायत्वैकतायत्वा ॥ २३ ॥ [ ३ ]
देवस्यत्वा । सवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥
आददेद्ध्वरकृतन्देवेब्भ्यऽइन्द्रस्यबाहुरसिदक्षिणᳬसहस्रभृष्टिᳬशतते
जावायुरसितिग्ग्मतेजाद्विषतोवधः ॥ २४ ॥ पृथिविदेवयजनि ॥
पृथिविदेवयजन्न्योषद्ध्यास्तेमूलम्माहिᳬसिषंव्व्रजङ्गच्छगोष्ठानंव्वर्ष

तुतेद्यौर्वधानदेवसवितःपरमस्याम्पृथिव्याᳪंशतेनपाशैर्योऽस्मा
न्द्वेष्टियञ्चवयन्द्विष्मस्तमतोमामौक् ॥ २५ ॥ अपाररुम् ॥
अपाररुम्पृथिव्यैदेवयजनाद्वध्यासंव्रजङ्गच्छगोष्ठानंवर्षतुतेद्यौर्वधा
नदेवसवितःपरमस्याम्पृथिव्याᳪंशतेनपाशैर्योऽस्मान्द्वेष्टियञ्चव
यन्द्विष्मस्तमतोमामौक् ॥ अररोदिवम्मापप्तोद्रप्सस्तेद्याम्मा
स्कन्व्रजङ्गच्छगोष्ठानंवर्षतुतेद्यौर्वधानदेवसवितःपरमस्याम्पृथि
व्याᳪंशतेनपाशैर्योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मस्तमतोमामौक्

॥ २६ ॥ गायत्रेणत्वा ॥ गायत्रेणत्वाच्छन्दसापरिगृह्णामित्रैष्टु
भेनत्वाच्छन्दसापरिगृह्णामिजागतेनत्वाच्छन्दसापरिगृह्णामि ॥
सुक्ष्माचासिशिवाचासिस्योनाचासिसुषदाचास्यूर्ज्जस्वतीचासिप
यस्वतीच ॥ २७ ॥ पुराक्रूरस्य । विसृपोविरप्शिन्नुदादायपृथिवी
ञ्जीवदानुम् ॥ यामैरयँश्चन्द्रमसिस्वधाभिस्तामुधीरासोऽअनुदि
श्यंयजन्ते ॥ प्रोक्षणीरासादयद्विषतोवधोसि ॥ २८ ॥ [ ५ ] ॥ ६ ॥
प्रत्युष्टहरक्षः ॥ प्रत्युष्टहरक्षःप्रत्युष्टाअरातयोनिष्टप्तहरक्षोनिष्ट

ष्ट्राअरांतयः ॥ अनिंशितोसिसपत्नक्षिद्वाजिनन्त्वावाजेध्यायैस
म्मार्ज्मि ॥ प्रत्युंष्टुहरक्षुःप्प्रत्युंष्टाऽअरांतयोनिष्टंप्त्तुहरक्षोनिष्टंप्ता
ऽअरांतयः॥अनिंशितासिसपत्नक्षिद्वाजिनीन्त्वावाजेध्यायैसम्मा
र्ज्मि ॥२९॥ आदित्यैरास्ना । सिविष्णोर्वेष्प्योस्यूर्ज्जे त्वादंब्धेनत्वा
चक्षुषावंपश्यामि ॥ अग्नेर्ज्जिह्वासिंसुहूर्देवेभ्योधाम्नेधाम्नेमेभव
यजुंषेयजुषे॥३०॥सवितुस्त्वा । प्प्रसवऽउत्पुंनाम्म्यच्छिंद्रेणपवित्रें

१ टीपः–वैष्पोसि इति काण्वानां पाठः । तत्संहिताभाष्ये छांदसः पकारादेश इति सायनाचार्योक्तेः । माध्यंदिनीयानां तु वेष्योसि इति पाठः । अत्र उवटमही-
धरादिभाष्यकारैः पकारादेशस्यानुक्तेः ।

णसूर्य्यस्यरश्मिभिः॥सवितुर्वः प्रसवऽउत्पुनाम्म्यच्छिद्रेणपवि
त्रेणसूर्य्यस्यरश्मिभिः ॥ तेजोसिशुक्रमस्यमृतमसिधामनामासि
प्प्रियन्देवानामनाधृष्टन्देवयजनमसि॥ ३१ ॥[ ३ ] इतिश्रीवाजस
नेयसंहितायांप्रथमोऽध्यायः॥१॥श्रीवेदपुरुषाय नमः। अनुवाकसू
त्रम्॥कृष्णोसिषड,ग्नेवाजजिन्तिस्रो,मयीद,मग्नीषोमयोः पंचका,
वग्नेदब्धायोचतस्रः, संवर्चसापंचा, ग्नयेकव्यवाहनायषट् सप्तचतु
स्त्रिंशत्॥हरिःॐकृष्णोसि॥ कृष्णोस्याखरेष्ठोग्नयेत्वाजुष्टम्प्रो

क्षामिवेदिरसि बर्हिषेत्वाजुष्टम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्ट
म्प्रोक्षाम्म्यदित्यैव्युन्दनम् ॥१॥ अदित्यैव्युन्दनमसिविष्णोस्तुपो
स्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्थान्देवेभ्योभुवपतयेस्वाहाभुव
नपतयेस्वाहा भूतानाम्पतयेस्वाहा ॥ २ ॥ गन्धर्वस्त्वा।विश्वावसुः
परिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥
इन्द्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्नि
रिडऽईडितः ॥ मित्रावरुणौत्त्वोत्तरतःपरिधत्तान्ध्रुवेणधर्म्मणावि

श्चस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः ॥ ३ ॥ व्वीतिहोत्रन्त्वा । कवेद्युमन्तꣳसमिधीमहि ॥ अग्नेबृहन्तमध्वरे ॥ ४ ॥ समिदसि ॥ समिदसिसूर्य्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशस्त्यै ॥ सवितुर्ब्बाहूस्त्थऽऊर्ण्णम्म्रदसन्त्वास्तृणामिस्वासस्थन्देवेभ्यऽआत्वाव्वसवोरुद्राऽआदित्याःसदन्तु ॥ ५ ॥ घृताच्यसि । जुहूर्नाम्नासेदम्प्रियेणधाम्नाम्प्रियꣳसदऽआसीदघृताच्यस्युपभृन्नाम्नासेदम्प्रियेणधाम्नाम्प्रियꣳसदऽआसीदघृताच्यसिध्रुवानाम्नासेदम्प्रियेण

धाम्नांप्रियꣳसदऽआसीदप्रियेणधाम्नांप्रियꣳसदऽआसीद ॥ ध्रु
वाऽअसदन्नृतस्ययोनौताविष्णोपाहिपाहियज्ञम्पाहियज्ञपतिंपा
हिमांयज्ञन्यम् ॥ ६ ॥ [ ६ ] अग्नेवाजजित् ॥ अग्नेवाजजिद्वा
जन्त्वासरिष्यन्तंवाजजितꣳसम्मार्ज्मि ॥ नमोदेवेभ्यः स्वधापि
तृभ्यः सुयमेमेभूयास्तमस्कन्नमद्य ॥ ७ ॥ अस्कन्नमद्य । देवेभ्य
ऽआज्यꣳसम्भ्रियासमङ्घ्रिणाविष्णोमात्वावक्रमिषंवसुमतीम
ग्नेतेच्छायामुपस्थेषंविष्णोस्थानमसीतऽइन्द्रोवीर्यमकृणोद्

९ ॥ ध्वोऽध्वरऽआस्थात् ॥ ८ ॥ अग्ने वेः ॥ अग्ने वेर्होत्रं वेर्दूत्यमवतान्त्वा
न्द्यावापृथिवीऽअवत्वन्द्यावापृथिवीस्विष्टकृद्देवेभ्यऽइन्द्रऽआज्ये
नहविषाभूत्स्वाहासञ्ज्योतिषाज्योतिः ॥ ९ ॥ [ ३ ] मयीदम् ॥
मयीदमिन्द्रऽइन्द्रियन्दधात्वस्मान्रायोमघवानःसचन्ताम् ॥ अ
स्माकंसन्त्वाशिषःसत्यानःसन्त्वाशिषऽउपहूतापृथिवीमातो
पमाम्पृथिवीमाताह्वयतामग्निराग्नीध्रात्स्वाहा ॥ १० ॥ उपहूतो ॥ ९ ॥
द्यौः ॥ उपहूतोद्यौष्पितोपमान्द्यौष्पिताह्वयतामग्निराग्नीध्रा

त्स्वाहा ॥ देवस्यत्वासवितुःप्प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ता
भ्याम् ॥ प्रतिगृह्णाम्म्यग्ग्नेष्ट्वास्येनप्प्राश्नामि ॥ ११ ॥ एतन्ते । देव
सवितर्य्यज्ञम्प्राहुर्ब्बृहस्प्पतयेब्रह्मणे ॥ तेनयज्ञमवतेनयज्ञपतिन्ते
नमामव ॥ १२ ॥ मनोजूतिः ॥ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्प्प
तिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइह
मादयन्तामोँऽम्प्प्रतिष्ठ ॥ १३ ॥ एषाते ॥ ऽअग्नेसमित्तयावर्द्धस्वचा
चप्प्यायस्व ॥ वर्द्धिषीमहिचवयमाचप्प्यासिषीमहि ॥ अग्नेवाज

जिद्वाजंन्त्वाससुवाꣳसंवाजजितꣳसम्मार्ज्मि ॥१४॥ [५] अग्नी पू. अ.
संहि. षोमयोरुज्जितिम् ॥ अग्नीषोमयोरुज्जितिमनूज्जेषंवाजस्यमाप्प्रसवे ॥ २ ॥
१० ॥ नप्प्रोहामि ॥ अग्नीषोमौतमपनुदतांय्योस्मान्द्वेष्टियञ्चवयन्द्वि
ष्मोवाजस्यैनम्प्रसवेनापोहामि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषंवाज
स्यमाप्प्रसवेनप्प्रोहामि ॥ इन्द्राग्नीतमपनुदतांय्योस्मान्द्वेष्टियञ्च
वयन्द्विष्मोवाजस्यैनम्प्रसवेनापोहामि ॥ १५ ॥ वसुभ्यस्त्वा । ॥ १०
रुद्रेभ्यस्त्वादित्येभ्यस्त्वासञ्जानाथान्द्यावापृथिवीमित्रावरुणौ

त्वावृष्ट्यावताम् ॥ ब्यन्तुवयोक्तꣳरिहाणामरुताम्पृषतीर्गच्छवशा
पृश्निर्भूत्वादिवङ्गच्छततोनोवृष्टिमावह ॥ चक्षुष्पाऽअग्नेसिचक्षु
र्म्मेपाहि ॥ १६ ॥ यम्परिधिम् ॥ यम्परिधिम्पर्य्यधत्थाऽअग्नेदेवप
णिभिर्गुह्यमानः ॥ तन्तऽएतमनुजोषम्भराम्म्येषनेत्त्वदपचेतया
ताऽअग्नेःप्प्रियम्पाथोपीतम् ॥ १७॥ सꣳस्रवभागास्त्थेषाबृहन्त
ःप्प्रस्तरेष्ठाःपरिधेयाश्चदेवाः ॥ इमांवाचमभिविश्वेगृणन्तऽआस
द्यास्मिन्बर्हिषिमादयद्ध्वꣳस्वाहावाट् ॥ १८॥ घृताचीस्त्थः ॥ घृ

ताचीस्त्थोध्रुवौपातꣳसुम्नेस्त्थꣳसुम्नेमाधत्तम् ॥ यज्ञनमश्चत
ऽउपचयज्ञस्यशिवेसन्तिष्ठस्वस्विष्टेमेसन्तिष्ठस्व ॥ १९ ॥ [५] अग्ने
दब्धायो । शीतमपाहिमादिद्योःपाहिप्रसित्यैपाहिदुरिष्ट्यैपाहिदु
रद्मन्याऽअविषन्नःपितुङ्कृणुसुषदायोनौस्वाहावाडग्नयेसंवेशपतये
स्वाहासरस्वत्यैयशोभगिन्यैस्वाहा ॥ २० ॥ वेदोसि ॥ वेदोसियेनत्वं
न्देववेददेवेभ्योवेदोभवस्तेनमह्यंवेदोभूयाः ॥ देवागातुविदोगातुं
वित्त्वागातमित ॥ मनसस्पतऽइमन्देवयज्ञꣳस्वाहावातेधाः ॥ २१ ॥

सम्बर्हिः ॥ सम्बर्हिरङ्क्ताꣳहविषाघृतेनसमादित्यैर्वसुभिःसम्मरु
द्भिः॥समिन्द्रोविश्वदेवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा॥२२॥
कस्त्वा ॥ कस्त्वाविमुञ्चतिसत्वाविमुञ्चतिकस्मैत्वाविमुञ्चतित
स्मैत्वाविमुञ्चति॥ पोषायरक्षसाम्भागोसि॥२३॥[४] संवर्च्च
सा॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासꣳशिवेन॥त्वष्टासु
दत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥२४॥दिविविष्णुः॥
दिविविष्णुर्व्यक्रꣳस्तजागतेनच्छन्दसाततोनिर्भक्तोयोस्मा

न्द्वेष्ट्टियञ्चवयन्द्विष्म्मोन्तरिक्षेविष्णुर्व्यक्रꣳस्तत्रैष्टुभेनच्छन्दसा
ततोनिर्भक्तोयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्म्मःपृथिव्यांविष्णुर्व्य
क्रꣳस्तगायत्रेणच्छन्दसाततोनिर्भक्तोयोस्म्मान्द्वेष्टियञ्चवयन्द्वि
ष्मोस्म्मादन्नादस्यैप्प्रतिष्ठायाऽअगन्मस्वःसञ्ज्योतिषाभूम ॥२५॥
स्वयम्भूरसि॥स्वयम्भूरसिश्श्रेष्ठोरश्मिर्व्वर्चोदाऽअसिवर्चोमेदेहि ॥
सूर्य्यस्यावृतमन्वावर्त्ते ॥२६॥ अग्नेगृहपते । सुगृहपतिस्त्वयाग्ने
हङ्गृहपतिनाभूयासꣳ सुगृहपतिस्त्वम्मयाग्नेगृहपतिनाभूयाः ॥

अस्त्थूरिणौगार्हपत्त्यानिसन्तुशतꣳहिमाऽसूर्य्यस्यावृतमन्त्वावर्त्ते
॥ २७ ॥ अग्नेव्रतपते । व्रतमचारिषन्तदशकन्तन्मेराधीदमहंय्य
ऽएवास्म्मिसोस्म्मि ॥ २८ ॥ [ ५ ] अग्नयेकव्यवाहनायस्वाहासो
मायपितृमतेस्वाहा ॥ अपहताऽअसुरारक्षाꣳसिवेदिषदः ॥ २९ ॥
येरूपाणि । प्रतिमुञ्चमानाऽअसुराऽसन्तःस्वधयाचरन्ति ॥ परा
पुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्म्मात् ॥ ३० ॥ अत्र
पितरः ॥ अत्रपितरोमादयद्ध्वंय्यथाभागमावृषायद्ध्वम् ॥ अमीमद

न्तापितरोयथाभागमावृषायिषत ॥ ३१ ॥ नमोवऽपितरोरसायनं
मोवऽपितरऽशोषायनमोवऽपितरोजीवायनमोवꣳपितरꣳस्वधायै
नमोवꣳपितरोघोरायनमोवꣳपितरोमन्न्यवेनमोवऽपितरꣳपितरोन
मोवोगृहान्नꣳपितरोदत्तसतोवꣳपितरोदेष्मैतद्वꣳपितरोवासऽआ
धत्त ॥ ३२ ॥ आधत्त । पितरोगर्ब्भङ्कुमारम्पुष्करस्रजम् ॥ यथेह
पुरुषोसत् ॥ ३३ ॥ ऊर्ज्जम्वहन्तीꣳ ॥ ऊर्ज्जम्वहन्तीरमृतङ्घृतम्पय
ꣳकीलालम्परिस्रुतम् ॥ स्वधास्त्थतर्प्पयतमेपितॄन् ॥ ३४ ॥ [ ६ ]

इतिश्रीवाजसनेयसंहितायांद्वितीयोऽध्यायः ॥ २ ॥ श्रीवेदपुरुषा
यनमः ॥ अनुवाक्सूत्रम् । समिधाग्निम्, भूर्भुवःस्वश्चतुष्का, वाग्नि
र्ज्योतिर्द्वे, उपप्रयन्तःषड्विंशतिः, भूर्भुवःस्वश्चतस्रो, गृहामातिस्रः,
प्रघासिनः पंच, पूर्णादर्विद्वे, ऽअक्षन्नमीमदन्तषडे, षते सप्त, दश
॥ १० ॥ त्रिषष्टिः ॥ हरिः ॐ समिधाग्निम् ॥ समिधाग्निन्दुवस्य
तघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ १ ॥ सुसमिद्धा
यशोचिषे । घृतन्तीव्रञ्जुहोतन ॥ अग्नयेजातवेदसे ॥ २ ॥ तन्त्वा ॥

समिद्भिरङ्गिरोघृतेनंवर्द्धयामसि ॥ बृहच्छोचायविष्ठ्य ॥ ३ ॥ उ
पंत्वा । ग्नेहविष्मंतीर्घृताचीर्यन्तुहर्य्यंत ॥ जुषस्वंसमिधोमम
॥४॥ [४] भूर्भुवः ॥ भूर्भुवःस्वर्द्यौरिवभूम्नापृथिवीवंवरिम्णा ॥
तस्यास्तेपृथिविदेवयजनिपृष्ठेग्निमन्नादमन्नाद्यायादधे॥५॥आयम्॥
आयङ्गौःपृश्निरक्रमीदसंदन्मातरंम्पुरः ॥ पितरंञ्चप्प्रयन्त्स्वः॥६॥
अन्तश्चरति ॥ रोचनास्यप्प्राणादपानती ॥ व्यख्यन्महिषोदिवम्
॥ ७ ॥ त्रिꣳशद्धाम ॥ त्रिꣳशद्धामविराजतिवाक्पतङ्गायधीयते ॥ प्र

तिवस्तोरहद्युभिः ॥ ८ ॥ [४] अग्निर्ज्योतिः ॥ अग्निर्ज्योतिर्ज्यो
तिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्च्चो ज्यो
तिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा ॥ ज्योतिः सूर्य्यः सू
र्य्यो ज्योतिः स्वाहा ॥ ९ ॥ सजूर्देवेन । सवित्रा सजूरात्र्येन्द्रवत्या ॥
जुषाणोऽअग्निर्वेतु स्वाहा ॥ सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या ॥
जुषाणः सूर्य्यो वेतु स्वाहा ॥ १० ॥ [२] उपप्रयन्तोऽअद्ध्वरम् ॥ उप
प्रयन्तोऽअद्ध्वरम्मन्त्रं वोचेमाग्नये ॥ आरेऽअस्म्मे च शृण्वते ॥ ११ ॥

अग्निर्म्मूर्द्धा। दिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसि
जिन्वति ॥ १२ ॥ उभावाम् ॥ उभावामिन्द्राग्नीऽआहुवद्ध्याऽउभा
राधसःसहमादयद्ध्यै ॥ उभादातारावीषाᳬरयीणामुभावाजस्यसा
तयेहुवेवाम् ॥ १३ ॥ अयन्ते ॥ अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽअ
रोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम् ॥ १४ ॥ अय
मिह। प्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्वीड्यः ॥ यमप्न
वानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ १५ ॥ अस्यप्प्रत्नाम् ॥


॥ १५ ॥

अस्यप्रत्नामनुद्युतꣳशुक्रन्दुदुह्रेऽअह्रयः॥ पयःसहस्रसामृषि
म्॥ १६॥ तनूपाऽअग्नेसितन्वम्मेपाह्यायुर्दाऽअग्नेस्यायुर्म्मेदेहिव
र्च्चोदाऽअग्नेसिवर्च्चोमेदेहि॥ अग्नेयन्मेतन्वाऽऊनन्तन्मऽआपृण
॥ १७॥ इन्धानास्त्वा। शतꣳहिमाद्युमन्तꣳसमिधीमहि॥ वयस्व
न्तोवयस्कृतꣳसहस्वन्तꣳसहस्कृतम्॥ अग्नेसपत्नदम्भनमदब्धासो
ऽअदाभ्यम्॥ चित्रावसोस्वस्तितेपारमशीय॥ १८॥ सन्त्वम्॥
सन्त्वमग्नेसूर्य्यस्यवर्च्चसागथाःसमृषीणाꣳस्तुतेन॥ सम्प्रियेणधा

म्न्नासमहमायुंषासंवर्चसासम्प्रजयासंᳪरायस्प्पोषेणग्मिषीय।१९।
अन्धंस्त्थ॥अन्धस्त्थान्धोवोभक्षीयमहंस्त्थमहोवोभक्षीयोर्ज्जंस्त्थो
र्ज्जंवोभक्षीयरायस्प्पोषंस्त्थरायस्प्पोषंवोभक्षीय ॥ २० ॥ रेवंतीरमं
द्ध्वम् ॥ रेवंतीरमंद्ध्वमस्मिन्न्योनावस्मिन्न्गोष्ठेस्मिँल्लोकेस्मिन्क्ष
यें॥ इहैवस्तमापंगात्॥ २१॥ सᳪहितासि। विश्वरूप्यूर्ज्जामाविंश
गौपत्त्येनं॥ उपंत्त्वाग्नेदिवेदिवेदोषावस्तर्द्धियावयम् ॥ नमोभरन्त
ऽएमंसि॥२२॥राजंन्तमद्ध्वराणाङ्गोपामृतस्यदीदिविम्॥वर्द्धमानᳪ

स्वेदसे ॥ २३ ॥ सनः ॥ सनः पितेवसूनवेग्नेसूपायनोभव ॥ सचस्वा
नःस्वस्तये॥२४॥अग्नेत्त्वम्॥अग्नेत्त्वन्नोअन्तंमऽउतत्राताशिवोभ
वावरूत्थ्यः ॥ वसुरग्निर्वसुश्श्रवाऽअच्छानक्षिद्युमत्तमःरयिन्दाः
॥ २५ ॥ तन्त्वा ॥ तन्त्वाशोचिष्ठदीदिवःसुम्म्नायनूनमीमहेसखि
भ्यः ॥ सनोबोधिश्श्रुधीहवमुरुष्ष्याणोऽअघायतःसमस्म्मात्
॥२६॥इडऽएहि॥इडएह्यदितऽएहिकाम्म्याऽएत॥मयिवःकामध
रणम्भूयात्॥२७॥सोमानञ्स्वरणं। कृणुहिब्रह्मणस्पते ॥ कक्षीवं

न्तंꣳय॑ऽऔ॑शि॒जः॥२८॥ योरे॑वान्॥ योरे॒वान्योऽअ॑मीव॒हाव॑सु॒वित्पु॒
ष्टि॒वर्द्ध॑नः॥ सनः॑सिषक्तु॒यस्तु॒रः॥२९॥ मानः॑ ॥ मानः॒शꣳसो॒ऽअर॑
रुषो॒धू॒र्तिः॒प्प्रण॒ङ्मर्त्य॑स्य॥ रक्षा॑णोब्रह्मणस्पते ॥३०॥ म॒हित्री॒णा
म्॥ म॒हित्री॒णाम॒वो॑स्तुद्यु॒क्षम्मि॒त्रस्या॒र्य॒म्म्णः॑ ॥ दु॒रा॒धर्षं॒व॒रु॑णस्य
॥३१॥ न॒हिते॒षाम्॥ न॒हिते॒षाम॒मा॒च॒न॒नाद्ध्व॑सु॒वा॒र॒णेषु॑ ॥ ईशे॑रि॒पुर
घशꣳस॑ऽ॥३२॥ ते॒हि॒पु॒त्रासो॒ऽअदि॑तेः॒प्प्रजी॒वसे॒मर्त्त्या॑य॥ ज्योति॒
र्य॑च्छ॒न्त्य॒जस्र॑म्॥३३॥ कदा॒च॒न॥ स्त॒रीर॑सि॒नेन्द्र॑सश्च॒सि॒दा॒शुषे॑॥

उपोपेन्नुमंघवुन्भूयऽइन्नुतेदानंन्देवस्यंपृच्यते ॥ ३४ ॥ तत्संवितुः ॥
तत्संवितुर्वरेण्यम्भर्गोदेवस्यंधीमहि॥धियोयोनंःप्रचोदयात् ३५
शतम् १०० ॥ परितेदूडभोरथोस्म्माँ२अंश्नोतुविश्वतंः ॥ येनरक्ष
सिदाशुर्षंः ॥ ३६ ॥ [२६] भूर्भुवंः ॥ भूर्भुवःस्वःसुप्रजाःप्रजा
भिंःस्याᳪंसुवीरोंवीरैःसुपोषःपोषैंः ॥ नर्य्यप्रजाम्मेपाहिशᳪंस्य
पशून्मेपाह्यथंर्य्यपितुम्पाहि ॥ ३७॥ आगंन्म। विश्ववेदसमस्म
भ्यंवसुवित्तंमम्॥अग्नेसम्राडभिद्युम्नमभिसहऽआयंच्छस्व३८

अयमग्निः ॥ अयमग्निर्गृहपतिर्गार्हपत्यःप्प्रजायावसुवित्तमः ॥
अग्नेगृहपतेभिद्युम्म्नमभिसहऽआयच्छस्व ॥ ३९ ॥ अयमग्निः ॥ अ
यमग्निःपुरीष्ष्योरयिमान्पुष्टिवर्द्धनः ॥ अग्नेपुरीष्ष्याभिद्युम्म्नम
भिसहऽआयच्छस्व ॥ ४० ॥ [४] गृहामा । बिभीतमावेपद्ध्वमूर्ज्जम्बि
भ्रतऽएमसि ॥ ऊर्ज्जम्बिभ्रद्वःसुमनाः सुमेधागृहानैमिमनसामो
दमानः ॥ ४१ ॥ येषामद्ध्येति । प्प्रवसन्येषुसौमनसोबहुः ॥ गृहानुपह्व
यामहेतेनोजानन्तुजानतः ॥ ४२ ॥ उपहूताऽइह । गावऽउपहूताऽ

अजावयः॥अथोऽअन्नस्यकीलालऽउपहूतोगृहेषुनः॥क्षेमायवःशा
न्त्यैप्रपद्येशिवꣳशग्मꣳशंय्योःशंय्योः॥४३॥[३]प्रघासिनोहवाम
हे।मरुतश्चरिशादसः॥करम्भेणसजोषसः॥४४॥यद्ग्रामे॥यद्ग्रामेय
दरण्येयत्सभायांय्यदिन्द्रिये॥यदेनश्चकृमावयमिदन्तदवयजा
महेस्वाहा॥४५॥मोषूण॥मोषूणऽइन्द्रात्रपृत्सुदेवैरस्तिहिष्मा
तेशुष्मिन्नवयाः॥महश्चिद्यस्यमीढुषोयव्याहविष्मतोमरुतोव
न्दतेगीः॥४६॥अक्रन्कर्म्मकर्म्मकृतःसहवाचामयोभुवा॥देवे

ञ्भ्युश्कर्म्मकृत्त्वास्तम्प्रेतंसचाभुवं॥४७॥अवभृथनिचुम्पुण।नि
चेरुरसिनिचुम्पुणः॥अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्म्मर्त्त्यकृ
तम्पुरुराव्णोदेवरिषस्प्पाहि॥४८॥[५] पूर्ण्णादर्वि॥पूर्ण्णादर्व्विपरा
पतसुपूर्ण्णापुनरापत।वस्नेवविक्क्रीणावहाऽइषमूर्ज्जंशतक्रतो ४९
देहिमे॥देहिमेददामितेनिमेधेहिनितेदधे॥निहारञ्चहरासिमेनि
हारन्निहराणितेस्वाहा॥५०॥अक्षन्नमीमदन्त॥अक्षन्नमीमदन्तह्य
वप्प्रियाऽअधूषत॥अस्तोषतस्वभानवोविप्प्रानविष्ठयामतीयोजा

न्विन्द्रतेहरी॥५१॥सुसन्दृशन्त्वा॥ सुसन्दृशन्त्वाव्वयम्मघवन्वन्दि
षीमहि ॥ प्रनूनम्पूर्णबन्धुरस्तुतोयासिव्वशाँ २ऽअनुयोजान्विन्द्रते
हरी ॥ ५२ ॥ मनोनु ॥ मनोन्वाह्वामहेनाराशꣳसेनस्तोमेन ॥ पि
तृणाञ्चमन्मभिः॥ ५३ ॥ आनः ॥ आनऽएतुमनःपुनःक्क्रत्वेदक्षा
यजीवसे॥ ज्योक्चसूर्य्यन्दृशे ॥५४॥ पुनर्न्नःपितरोमनोददातुदैव्यो
जनः ॥ जीवंव्व्रातꣳसचेमहि ॥ ५५ ॥ व्वयꣳसोमव्व्रतेतवमनस्तनूषु
बिभ्रतः ॥ प्रजावन्तꣳसचेमहि ॥ ५६ ॥ एषते । रुद्रभागꣳसहस्व

स्वाम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः ॥ ५७ ॥ अ
वरुद्रम् ॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम् ॥ यथानोवस्यसस्करद्
यथानश्श्रेयसस्करद्यथानोव्यवसाययात् ॥ ५८ ॥ भेषजमसि ।
भेषजङ्गवेश्वायपुरुषायभेषजम् ॥ सुखम्मेषायमेष्यै ॥ ५९ ॥ त्र्य
म्बकंयजामहे । सुगन्धिम्पुष्टिवर्द्धनम ॥ उर्व्वारुकमिवबन्धनान्मृ
त्योर्मुक्षीयमामृतात् ॥ त्र्यम्बकंयजामहेसुगन्धिम्पतिवेदनम् ॥
उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्ते । रुद्राव

सन्तेनंपरोमूजंवतोतीहि ॥ अवततधन्वापिनाकावसःकृत्तिवासाऽ
अहिँ०सन्नःशिवोतीहि ॥ ६१ ॥ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्या
युषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥६२॥ शिवोनाम ॥
शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिँ०सीः ॥ निव
र्त्तयाम्म्यायुषेन्नाद्यायप्प्रजननायरायस्प्पोषायसुप्प्रजास्त्वायसुवी
र्य्याय ॥ ६३ ॥ १० ॥ [७] इतिश्रीवाजसनेयसंहितायांतृतीयोऽ
ध्यायः ॥ ३ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ एदंद्वे, मही

नाम्पयश्चतस्र, आकूत्या, ऋक्सामयो, द्विकौ, व्रतंकृणुतषडे, षते
चतस्रो, वस्व्यासितिस्र, एपतेद्वे, शुक्रंत्वाचतस्रोदित्यास्त्वगष्टौ,
दशसप्तात्रिꣳशत् ॥ १० ॥ हरिःॐ एदम् ॥ एदमगन्मदेवयजनम्पृ
थिव्यायत्रदेवासोऽअजुषन्तविश्वे ॥ ऋक्सामाभ्याꣳसन्तरन्तोय
जुर्भीरायस्पोषेणसमिषामदेम ॥ इमाऽआपꣳशमुमेसन्तुदेवीरो
षधेत्रायस्वस्वधितमैनꣳहिꣳसीः ॥ १ ॥ आपोऽअस्मान् ॥ आपोऽ ॥२१॥
अस्मान्मातरः शुन्धयन्तुघृतेननोघृतप्प्वः पुनन्तु ॥ विश्वꣳहि

रिप्रम्प्रवहन्तिदेवीरुदिदाब्भ्यःशुचिरापूतऽएमि ॥ दीक्षातपसोस्त
नूरसितान्त्वाशिवाꣳशग्ग्माम्परिदधेभद्द्रंवर्णम्पुष्ष्यन् ॥ २ ॥ [२]
महीनाम्पयः ॥ महीनाम्पयोसिवर्च्चोदाऽअसिवर्च्चोमेदेहि ॥ वृत्र
स्यासिकनीनकश्चक्षुर्द्दाऽअसिचक्षुर्म्मेदेहि ॥३॥ चित्पतिर्म्मा ॥ चि
त्पतिर्म्मापुनातुवाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्द्रेण
पवित्त्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यतेपवित्त्रपतेपवित्त्रपूतस्ययत्त्का
मःपुनेतच्छकेयम ॥ ४ ॥ आवः ॥ आवोदेवासऽईमहेवामम्प्रय

त्यृद्धुरे ॥ आवोंदेवासऽआशिषोंयुज्ञियासोहवामहे ॥ ५ ॥ स्वाहा
युज्ञम् ॥ स्वाहायुज्ञंमनंसुᳬस्वाहोरोरुन्तरिक्षात्स्वाहाद्यावापृथिवी
ब्भ्याᳬस्वाहावातादारंभेस्वाहा ॥६॥ [४] आकूत्यैप्प्रयुजे ॥ आकू
त्यैप्प्रयुजेग्नयेस्वाहामेधायैमनंसेग्नयेस्वाहादीक्षायैतपसेग्नयेस्वा
हासरस्वत्यैपूष्णेग्नयेस्वाहा ॥ आपोंदेवीर्बृहतीर्व्विश्वशम्भुवोद्या
वापृथिवीऽउरोऽअन्तरिक्ष ॥ बृहुस्पतंयेहविषांविधेमस्वाहा ॥७॥
व्विश्वोदेवस्य ॥ व्विश्वोदेवस्यंनेतुर्म्मर्तोंवुरीतसुख्यम् ॥ व्विश्वोरायऽइषु

द्युतिद्युम्न्नंवृणीतपुष्यसेस्वाहा॥८॥[२]ऋक्क्सामयोऽशिल्पे॥ऋ
क्क्सामयोऽशिल्पेस्त्थस्तेवामारभेतेमापातमास्ययज्ञस्योदृचं÷॥
शर्म्मासि शर्म्ममेयच्छनमस्तेऽअस्तुमामाहिᳬसीः ॥ ९ ॥ ऊर्ग्ग
सि॥ऊर्ग्गस्याङ्गिरस्यूर्णम्म्रदाऽऊर्ज्जंमयिधेहि॥ सोमस्यनीविरसि
विष्णोऽशर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसिसुसस्याःकृषी
स्कृधि ॥ उच्छ्रयस्ववनस्पतऽऊर्द्ध्वोमापाह्यᳬहसऽआस्ययज्ञस्यो
दृचं÷॥ १० ॥[२]व्रतङ्कृणुत।व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञोवन

स्प्पतिर्य्युज्ञियं÷ ॥ दैवीन्धियम्मनामहेसुमृडीकामभिष्टयेवर्च्चोधां

य्यज्ञवाहस ँ सुतीर्थानोऽअसद्द्वशे ॥ येदेवामनोजातामनोयुजोद

क्षंक्रतवस्तेनोवन्तुतेनं÷पान्तुतेभ्य्युः स्वाहा ॥११॥ श्वात्त्राःपीताः॥

श्वात्त्राःपीताभवतयूयमापोऽअस्म्माकमन्तरुदरेसुशेवाः ॥ ताऽअ

स्म्मभ्य्यमयुक्ष्माऽअनमीवाऽअनागसः स्वदन्तुदेवीरमृताऽऋता

वृधं÷ ॥ १२ ॥ इयन्ते । यज्ञियातनूरपोमुञ्चामिनप्प्रजाम् ॥ अ ँ

होमुचः स्वाहाकृताऽपृथिवीमाविशतपृथिव्यासम्भव ॥१३॥ अग्ने

त्वम् ॥ अग्ग्नेत्वꣳसुजांगृहिव्वयꣳसुमंन्दिषीमहि ॥ रक्षाणोऽअप्प्रंयु
च्छन्प्रबुधेनꣳपुनंस्कृधि ॥१४॥ पुनर्म्मनं÷ ॥ पुनर्म्मनꣳपुनरायुंर्म्मऽ
आगन्पुनं÷प्प्राणश्पुनंरात्त्मामऽआगन्पुनश्चक्षुꣳपुनꣳश्श्रोत्त्रंम्मऽ
आगंन् ॥ व्वैश्श्वानरोऽअदंब्धस्तनूपाऽअग्निर्न्नं÷पातुदुरितादंवद्यात्
॥१५॥ त्वमंग्ने।व्व्रतपाऽअंसिदेवऽआमर्त्येष्व्वा॥त्वंय्यज्ञेष्व्वीड्यं÷
॥ रास्वेयंत्सोमाभूयोभरदेवोनं÷सविताव्वसोर्द्दाताव्वस्वंदात् ॥ १६ ॥
[ ६ ] एषातेंशुक्रतनूरेतद्वर्च्चस्तयासम्भंवभ्राजंङ्गच्छ ॥ जूरंसिधृता

मनसाजुष्टाविष्णवे॥१७॥तस्यास्ते।सत्यसवसःप्प्रसवेतन्न्वोयन्त्र
मशीयस्वाहा ॥ शुक्रमसिचन्द्रमस्यमृतमसिवैश्वदेवमसि ॥ १८ ॥
चिदसि । मनासिधीरसिदक्षिणासिक्षत्रियासियज्ञियास्यदितिरस्यु
भयतःशीर्ष्णी॥सानःसुप्प्राचीसुप्प्रतीच्च्येधिमित्रस्त्वापदिबध्नी
तात्पूषाद्ध्वनस्प्पात्विन्द्रायाद्ध्यक्षाय ॥१९॥ अनुत्वामातामन्न्यता
मनुपितानुब्भ्रातासगर्ब्भ्योनुसखासयूत्थ्यः ॥ सादेविदेवमच्छेही
न्द्रायसोमःरुद्रस्त्वावर्त्तयतुस्वस्तिसोमसखापुनरेहि ॥ २० ॥ [४]

वस्व्यंसि ॥ वस्व्युस्यदितिरस्यादित्त्यासिरुद्रासिचन्द्रासि ॥ बृहस्प
तिंष्ट्वासुम्म्नेरंम्म्णातुरुद्रोवसुंभिराचंके ॥ २१ ॥ अदित्त्यास्त्वा । मू
र्द्धन्नाजिंघर्म्मिदेवयजंनेपृथिव्याऽइडायास्पदमंसिघृतवत्स्वाहा ॥
अस्म्मेरंमस्वास्म्मेतेबन्धुस्त्वेरायोमेरायोमायवृँरायस्प्पोषेणवि
यौष्म्मतोतोरायः ॥ २२ ॥ समक्ख्ये । देव्याधियासन्दक्षिणयोरु
चक्षसा ॥ मामऽआयुःप्प्रमोषीर्म्मोऽअहन्तववीरंविदेयतवदेविसन्दृ
शि ॥ २३ ॥ [३] एषते । गायत्रोभागऽइतिमेसोमायब्रूतादेषतेत्रै

ष्टुंभोभागऽइतिमेसोमायब्रूतादेषतेजागतोभागऽइतिमेसोमायब्रू
ताच्छन्दोनामानाᳬसाम्राज्यङ्गच्छेतिमेसोमायब्रूतादास्माकोऽ
सिशुक्रस्तेग्रहयोविचितस्त्वाविचिन्वन्तु ॥ २४ ॥ अभित्त्यम् ॥ अ
भित्त्यन्देवᳬसवितारमोण्योः÷कविक्क्रतुमर्चामिसत्त्यसवᳬरत्नधा
मभिप्रियम्मतिङ्कविम् ॥ ऊर्द्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनि
हिरण्यपाणिरमिमीतसुक्रतु÷कृपास्व÷॥प्रजाब्भ्यस्त्वाप्रजास्त्वा ॥२५॥
नुप्प्राणन्तुप्रजास्त्वमनुप्प्राणिहि ॥ २५ ॥ [२] शुक्रन्त्वा । शुक्रे

णंक्रीणामिचन्द्रञ्चन्द्रेणामृतममृतेन ॥ सग्ग्मेतेगोरस्म्मेतेचन्द्रा
णितपसस्तनूरसिप्प्रजापतेर्व्वर्ण्णः परमेणपशुनाक्रीयसेसहस्रपोष
म्पुषेयम् ॥ २६ ॥ मित्रोनः ॥ मित्रोनऽएहिसुमित्रधऽइन्द्रस्योरु
माविशदक्षिणमुशन्नुशन्तꣳस्योनःस्योनम् ॥ स्वानभ्राजाङ्घारेब
म्भारेहस्तसुहस्तकृशानवेतेवः सोमक्रयणास्तान्रक्षद्ध्वम्मावोदभन्॥
॥ २७ ॥ परिमा । ग्नेदुश्चरिताद्बाधस्वामासुचरितेभज ॥ उदायुषा
स्वायुषोदस्थाममृताँऽअनु ॥ २८ ॥ प्रतिपन्थाम् ॥ प्रतिपन्थामप

ञ्चाहिस्वस्तिगामनेहसम् ॥ येनविश्वाःपरिद्विषोवृणक्तिविन्दतेवसु
॥ २९ ॥ [४] अदित्यास्त्वक् ॥ अदित्यास्त्वगस्यदित्यैसदुऽआसी
द ॥ अस्तभ्नाद्यांवृषभोऽअन्तरिक्षममिमीतवरिमाणम्पृथिव्याः॥
आसीदुद्विश्वाभुवनानिसम्म्राड्विश्वेत्तानिवरुणस्यव्रतानि ॥ ३० ॥
वनेषुवि ॥ वनेषुव्यन्तरिक्षन्ततानवाजमर्वत्सुपयऽउस्त्रियासु ॥ हृ
त्सुक्रतुंवरुणोविक्ष्वग्निन्दिविसूर्य्यमदधात्सोममद्रौ ॥ ३१ ॥ सू
र्य्यस्यचक्षुः ॥ सूर्य्यस्यचक्षुरारोहाग्नेरक्ष्णःकनीनकम् ॥ यत्रैतंशो

भिरीयंसेभ्राजंमानोव्विपश्चिता ॥ ३२ ॥ उस्रावेतंम् ॥ उस्रावेतन्धूर्षाहौयुज्येथांमनुश्श्रूऽअवीरहणौब्ब्रह्मचोदंनौ ॥ स्वस्तियजंमानस्य गृहाङ्गंच्छतम् ॥ ३३ ॥ भद्रोमे । सिष्प्रऽयंवस्वभुवस्पतेव्विश्वांन्यभिधामांनि ॥ मात्त्वांपरिपरिणौंव्विदुन्मात्वांपरिपन्थिनौंव्विदुन्मात्वावृकांऽअघायवोंव्विदन् ॥ श्येनोभूत्वापरांपतयजंमानस्यगृहाङ्गच्छतन्नौसँस्कृतम् ॥ ३४ ॥ नमोंमित्रस्य ॥ नमोंमित्रस्यव्वरुंणस्यचक्षसेमहोदेवायतदृतꣳसंपर्य्यत ॥ दूरेदृशेंदेवजांतायकेतवेंदिवस्पु

त्रायसूर्य्यायशꣳसत ॥३५॥ वरुणस्योत्तम्भनम् ॥ वरुणस्योत्तम्भन
मसिवरुणस्यस्कम्भसर्जनीस्त्थोवरुणस्यऽऋतसदन्न्यसिवरुणस्यऽ
ऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ३६ ॥ याते ॥ यातेधा
मानिहविषायजन्तिताते विश्वापरिभूरस्तुयज्ञम् ॥ गयस्फानः प्प्र
तरणꣳसुवीरोवीरहाप्प्रचरासोमदुर्य्यान् ॥ ३७ ॥ [८] इतिश्रीवाज
सनेयसंहितायांचतुर्थोऽध्यायः ॥ ४ ॥ श्रीवेदपुरुषायनमः ॥ अनुवा
कसूत्रम् अग्नेस्तनू, रापतयेचतुष्कौ, तस्मायनीद्वे, इन्द्रघोषस्तिस्रो,

युंजतेष्टौ, देवस्यत्वाचतस्रो, देवस्यत्वापंच, विभूरसिचतस्रो, ज्योति
रसिषड्डुरुविष्णोतिस्रो, दशत्रिचत्वारिꣳशत्॥हरिः ॐअग्नेस्तनूः॥
अग्नेस्तनूरसिविष्णवेत्त्वासोमस्यतनूरसिविष्णवेत्त्वातिथेराति
त्थ्यमसिविष्णवेत्त्वाश्येनायेत्त्वासोमभृतेविष्णवेत्त्वाग्नयेत्त्वारा
यस्पोषदेविष्णवेत्त्वा ॥१॥ अग्नेर्जनित्रम् ॥ अग्नेर्जनित्रमसिवृष
णौस्त्थऽउर्वश्यस्यायुरसिपुरूरवाऽअसि॥गायत्रेणत्त्वाच्छन्दसाम
न्थामित्रैष्टुभेनत्त्वाच्छन्दसामन्थामिजागतेनत्त्वाच्छन्दसामन्था

मि॥२॥भवंतन्नः॥भवंतन्नःसमनसौसचेतसावरेपसौ॥मायज्ञꣳहिꣳ
सिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः॥३॥अग्नावग्निश्च॥
अग्नावग्निश्चरतिप्प्रविष्टऽऋषीणाम्पुत्त्रोऽअभिशस्तिपावा॥सनः
स्योनःसुयजायजेहदेवेभ्योहव्यꣳसदमप्प्रयुच्छन्त्स्वाहा॥४॥[४]
आपतयेत्त्वा॥आपतयेत्त्वापरिपतयेगृह्णामितनूनप्त्रेशाक्वरायश
क्क्नऽओजिष्ठाय॥अनाधृष्टमस्यनाधृष्यन्देवानामोजोनभिश
स्त्यभिशस्तिपाऽअनभिशस्तेन्यमञ्जसासत्त्यमुपगेषꣳस्वितेमा

धाऽ॥५॥अग्ग्नेव्व्रतपाऽ॥ अग्ग्नेव्व्रतपास्त्वेव्व्रतपायातवतनूरियꣳसाम
यियोममतनूरेषासात्वयि ॥ सहनौव्व्रतपतेव्व्रतान्यनुमेदीक्षान्दी
क्षापतिर्म्मन्यतामनुतपस्तपस्पतिः॥६॥ अꣳशुरꣳशुष्टे । देवसोमा
प्प्यायतामिन्द्रायैकधनविदे॥ आतुब्भ्यमिन्द्रःप्प्यायतामात्वमि
न्द्रायप्प्यायस्व ॥ आप्प्याययास्म्मान्त्सखीन्त्सन्न्यामेधयास्वस्ति
तेदेवसोमसुत्यामशीय॥ एष्टारायःप्प्रेषेभगायऽऋतमृतवादिब्भ्यो
नमोद्यावापृथिवीब्भ्याम् ॥ ७॥ यातै ॥ यातेऽअग्नेयःशयातनूर्व

पिंष्ठागह्वरेष्ठा ॥ उग्रंव्वचोऽअपांवधीत्त्वेषंव्वचोऽअपांवधीत्स्वाहा ॥
यातेऽअग्नेरजꣳशयातनूर्वर्षिष्ठागह्वरेष्ठा ॥ उग्रंव्वचोऽअपांवधीत्त्वेषं
वचोऽअपांवधीत्स्वाहा ॥ यातेऽअग्नेहरिशयातनूर्वर्षिष्ठागह्वरेष्ठा ॥
उग्रंव्वचोऽअपांवधीत्त्वेषंव्वचोऽअपांवधीत्स्वाहा ॥८॥ [४] तप्ताय
नीमे ॥ तप्तायनीमेऽसिवित्तायनीमेस्यवतान्मानाथितादवतान्मा
व्यथितात् ॥ विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुनानाम्नेहियो
स्याम्पृथिव्यामसियत्तेनाधृष्टन्नामयज्ञियन्तेनत्त्वादधेविदेदग्निर्न्न

भोनामाग्नेऽअङ्गिरऽआयुनानाम्नेहियोद्वितीयस्याम्पृथिव्याम
सियत्तेनाधृष्टन्नामयज्ञियन्तेनत्वादधेविदेदुग्निर्न्नभोनामाग्नेऽअ
ङ्गिरऽआयुनानाम्नेहियस्तृतीयस्याम्पृथिव्यामासियत्तेनाधृष्टन्ना
मयज्ञियन्तेनत्वादधे ॥ अनुत्वादेववीतये ॥ ९ ॥ सिꣳह्यसि ॥ स
पत्नसाहीदेवेभ्यः कल्पस्वसिꣳह्यसिसपत्नसाहीदेवेभ्यः शु
न्धस्वसिꣳह्यसिसपत्नसाहीदेवेभ्यः शुम्भस्व ॥ १० ॥ [२] इन्द्र
घोषस्त्वा॥इन्द्रघोषस्त्वावसुभिः पुरस्तात्पातुप्रचेतास्त्वारुद्रैः पश्चा

त्पांतुमनोजवास्त्वापितृभिर्दक्षिणतश्पांतुविश्वकर्म्मात्त्वादित्त्यैरु
त्तरतश्पात्विदमहन्तुप्तंब्बाबहिर्द्धायज्ञान्निश्सृंजामि ॥ ११ ॥ सिᳯ
ह्यसि ॥ सिᳯह्यसिस्वाहासिᳯह्यस्यादित्यवनिᳲस्वाहासिᳯह्यसिब्र
ह्मवनिःक्षत्रवनिᳲस्वाहासिᳯह्यसिसुप्रजावनीरायस्पोषवनिᳲ
स्वाहासिᳯह्यस्यावहदेवान्यजमानायस्वाहाभूतेभ्यस्त्वा ॥ १२ ॥
ध्रुवोसि । पृथिवीन्दृᳲहध्रुवाक्षिदस्यन्तरिक्षन्दृᳲहाच्युताक्षिदासिदिव
न्दृᳲहाग्नेश्पुरीषमसि ॥ १३ ॥ [ ३ ] युञ्जतेमनः ॥ युञ्जतेमनᳫउ

तयुंञ्जतेधियोविप्राविप्प्रंस्यबृहतोविपश्चित÷ ॥ विहोत्रादधेवयुना
विदेकऽइन्मुहिदेवस्यंसवितु॑ःपरिष्टुति॑ःस्वाहा ॥१४॥ इदंविष्णु÷॥
इदंविष्णुर्विचंक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांᳫसुरेस्वाहा
॥ १५ ॥ इरांवतीधेनुमती ॥ इरांवतीधेनुमतीहिभूत॑ꣳसूयवसिनीम
नवेदशस्या ॥ व्यंस्कभ्ना॒रोदसीविष्णवेतेदाधर्थपृथिवीमभितोम
यूखैःस्वाहा ॥ १६ ॥ देवश्श्रुतौदेवेषु ॥ देवश्श्रुतौदेवेष्वाघोषतम्प्रा
चीप्प्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वंय्यज्ञन्नयतम्माजिह्वरतम् ॥ स्वङ्गो

ष्टुमावदतन्देवीदुर्ष्येऽआयुम्मांनिर्वीदिष्टम्प्रजाम्मानिर्वीदिष्टमत्रैर
मेथांव्वष्मंस्पृथिव्याः॥१७॥व्विष्णोर्नु।कंव्वीर्याणिप्प्रवोचंयःं
पार्थिवानिव्विममेरजांसि॥ योऽअस्कंभायदुत्तरंसधस्थंव्विचक्र
माणस्त्रेधोरुगायोव्विष्णवेत्वा॥ १८॥ दिवोवा। व्विष्णऽउतवापृ
थिव्यामहोवाव्विष्णऽउरोरन्तरिक्षात्॥उभाहिहस्तावसुनापृणस्वा
प्प्रयच्छदक्षिणादोतसव्याद्विष्णवेत्वा॥१९॥ प्रतत्॥ प्रतद्विष्णु
स्तवतेव्वीर्येणमृगोनभीमःकुचरोगिरिष्ठाः॥यस्योरुषुत्रिषुविक्रम

णेष्ष्वाधिक्षियन्तिभुवनानिविश्वा ॥२०॥ विष्ष्णोरराटम् ॥ विष्ष्णो
रराटमसिविष्ष्णोऽश्नप्प्त्रेस्थोविष्ष्णोःस्यूरसिविष्ष्णोर्द्ध्रुवोसि ॥ वै
ष्ष्णवमसिविष्ष्णवेत्त्वा ॥ २१ ॥ [८] देवस्यत्त्वा । सवितुःप्प्रसवे
ऽश्विनोर्बाहुब्भ्याम्पूष्ष्णोहस्ताब्भ्याम् ॥ आददेनार्य्यसीदमहꣳरक्ष
साङ्ग्रीवाऽअपिकृन्तामि ॥ बृहन्नसिबृहद्द्रवाबृहतीमिन्द्रायवाचंव्वद
॥ २२ ॥ रक्षोहणंवलगहनम् ॥ रक्षोहणंवलगहनंवैष्ष्णवीमिदमह
न्तंवलगमुत्किरामियम्मेनिष्ट्योयममात्त्योनिचखानेदमहन्तंवल

गमुत्किरामियम्मैसमानोयमसमानोनिचखानेदमहन्तंवलगमु
त्किरामियम्मेसबन्धुर्य्यमसबन्धुर्निचखानेदमहन्तंवलगमुत्किरा
मियम्मैसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥ २३ ॥ स्व
राडसि। सपत्नहासंत्रराडस्यभिमातिहाजंनराडसिरक्षोहासंर्वराड
स्यमित्रहा ॥ २४ ॥ रक्षोहणोवः ॥ रक्षोहणोवोवलगहनंप्प्रोक्षा
मिवैष्णवान्रक्षोहणोवोवलगहनोवंनयामिवैष्णवान्रक्षोहणोवो
वलगहनोवंस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाऽउपंदधामिवै

ष्णुवीरक्षोहणौवांवलगहनौपव्यूँहामिवैष्णवीवैष्णवमसिवै
ष्णुवास्थ ॥ २५ ॥ [ ४ ] देवस्यत्त्वा । सवितुःप्प्रसवेऽश्विनोर्बाहुभ्भ्याम्
पूष्णोहस्ताभ्भ्याम् ॥ आददेनार्य्यसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृ
न्तामि ॥ यवोसियवयास्म्मद्द्वेषोयवयारातीर्दिवेत्त्वान्तरिक्षायत्त्वा
पृथिव्यैत्त्वाशुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि ॥ २६ ॥
उद्दिवम् ॥ उद्दिवꣳस्तभानान्तरिक्षम्पृणदृꣳहस्वपृथिव्यान्द्युतान
स्त्वामारुतोमिनोतुमित्रावरुणौद्ध्रुवेणधर्म्मणा ॥ ब्रह्मवनित्त्वाक्ष

अवनिरायस्पोषवनिपर्य्यूहामि ॥ ब्रह्मंदृꣳहक्षत्रन्दृꣳहायुर्दृꣳहप्र
जान्दृꣳह ॥ २७ ॥ ध्रुवासि । ध्रुवोयंय्यजमानोस्मिन्नायतनेप्रज
यापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवीपूर्य्येथामिन्द्रस्यच्छदिरसि
विश्वजनस्यच्छाया ॥ २८ ॥ परित्वा । गिर्व्वणोगिरऽइमाभवन्तु
विश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः ॥ २९ ॥ इन्द्रस्य
स्यूरसीन्द्रस्यध्रुवोसि ॥ ऐन्द्रमसिवैश्वदेवमसि ॥ ३० ॥ [५] विभू
रसि । प्रवाहणोवह्निरसिहव्यवाहनः ॥ श्वात्रोसिप्रचेतास्तुथोसि

व्विश्श्ववेदाऽउशिगसि ॥ ३१ ॥ उशिगसि । कविरङ्घारिरसिबम्भारि
रवस्यूरसिदुवस्वाञ्छुन्ध्यूरसिमार्ज्जालीयं सम्म्राडसिकृशानुःप
रिषद्योसिपवमानोनभोसिप्प्रतक्कामृष्टोसिहव्यसूदनऽऋतधामा
सिस्वर्ज्योतिःऽसमुद्रोसि ॥ ३२ ॥ समुद्रोसि । व्विश्वव्यचाऽअजो
स्येकपादहिरसिबुध्न्योव्वागस्यैन्द्रमसिसदोस्यृतस्यद्वारौमामासन्ता
प्तमद्ध्वनामद्ध्वपतेप्प्रमातिरस्वस्तिमेस्मिन्पथिदेवयानेभूयात्त्मित्र
स्यमा ॥ ३३ ॥ मित्रस्यमा । चक्षुषेक्षद्ध्वमग्ग्नयःसगराःसगरास्त्थ

सगरेणनाम्नारौद्रेणानीकेनपातमाग्नयःपिपृतमाग्नयोगोपायतं
मानमौवोस्तुमामाहिᳬसिष्ट ॥ ३४ ॥ [४] ज्योतिरसि ॥ विश्वरू
पंविश्वेषान्देवानांᳬसमित् ॥ त्वᳬसोमतनूकृद्भ्योद्वेषोभ्योन्यकृते
भ्यऽउरुयन्तासिवरूथᳬस्वाहाजुषाणोऽअप्तुराज्यस्यवेतुस्वाहा
॥ ३५ ॥ शतम् २०० ॥ अग्नेनय । सुपथारायेऽअस्मान्विश्वानि
देववयुनानिविद्वान् ॥ युयोध्युस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽ
उक्तिंविधेम ॥ ३६ ॥ अयन्नः ॥ अयन्नोऽअग्निर्वरिवस्कृणोत्वय

न्मृधः पुरएतुप्प्रभिन्दन् ॥ अयंवाजाञ्जयतुवाजसातावयꣳशत्रूञ्ज
यतुजर्हृषाणःस्वाहा ॥ ३७ ॥ उरुविष्णोविक्क्रमस्वोरुक्षयायन
स्कृधि ॥ घृतंघृतयोनेपिबप्प्रप्प्रयज्ञपतिन्तिरस्वाहा ॥ ३८ ॥ देव
सवितः ॥ देवसवितरेषतेसोमस्तꣳरक्षस्वमात्वादभन् ॥ एतंत्वन्देव
सोमदेवोदेवाँ२ऽउपागाऽइदमहम्मनुष्ष्यान्त्सहरायस्पोषेणस्वा
हानिर्व्वरुणस्यपाशान्मुच्ये ॥ ३९ ॥ अग्ग्नेव्रतपाः ॥ अग्ग्नेव्रतपास्त्वे
व्रतपायातवतनूर्म्मय्यभूदेषासात्वयियोममतनूस्त्वय्यभूदियꣳ

सामयि ॥ यथायथन्नौव्रतपतेव्रतान्यनुमेदीक्षान्दीक्षापतिरम॑ꣳ
स्तानुतपस्तपस्पतिः ॥ ४० ॥ [६] उरुविष्णो ॥ उरुविष्णोविक्र
मस्वोरुक्षयायनस्कृधि ॥ घृतङ्घृतयोनेपिबप्रप्रयज्ञपतिन्तरस्वाहा
॥ ४१ ॥ अत्यन्यान् ॥ अत्यन्याँ२ऽअगान्नान्याँ२ऽउपागामर्वा
क्त्वापरेभ्योविदम्परोवरेभ्यः ॥ तन्त्वाजुषामहेदेववनस्पतेदेव
यज्यायैदेवास्त्वादेवयज्यायैजुषन्ताँविष्णवेत्त्वा ॥ ओषधेत्रायस्व
स्वधितेमैनꣳहिꣳसीः ॥ ४२ ॥ द्याम्मा ॥ द्याम्मालेखीरन्तरिक्ष

म्माहिꣳसीꣳपृथिव्यासम्भव ॥ अयꣳहित्वास्वधितिस्तेतिजानꣳप्प्र
णिनायमहतेसौभगाय ॥ अतस्त्वन्देववनस्प्पतेशतवल्शोविरोह
सहस्रवल्शाविवयꣳरुहेम ॥ ४३ ॥ [३] १० ॥ इतिश्रीवाजसनेय
संहितायांपंचमोऽध्यायः ॥ ५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्
सूत्रम् ॥ देवस्यत्वाषडुपावीरासिपंचमाहिःषट्संतेतिस्त्रःसमुद्रंगच्छहद
विष्मतीर्द्विकौहदेत्वापंचदेवस्यत्वाष्टौसप्तत्रिꣳशत् ॥ हरिः ॐदेव
स्यत्वा । सवितुःप्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आदे

देनाऽऽर्यसीदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि॥यवोसियवयास्म्मद्द्वे
षोयवयारातीर्हिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धन्ताँल्लोकाः
पितृषदनाःपितृषदनमसि ॥ १ ॥ अग्ग्रेणीरसि । स्वावेशऽउन्नेतॄणा
मेतस्यवित्तादधित्वास्थास्यतिदेवस्त्वासवितामद्ध्वानक्तुसुपिप्पला
भ्यस्त्वौषधीब्भ्यः ॥ द्यामग्ग्रेणास्पृक्षऽआन्तरिक्षम्मद्ध्येनाप्प्राःपृ
थिवीमुपरेणादृꣳहीः ॥ २ ॥ याते ॥ यातेधामान्न्युश्मसिगमद्ध्यैय
त्रगावोभूरिशृङ्गाअयासः ॥ अत्राहतदुरुगायस्यविष्णोःपरमम्प

दमवेभासिभूरि ॥ ब्रह्मवनिंत्त्वाक्षत्रवनिंरायस्पोषवनिपर्य्यूहा
मि ॥ ब्रह्मदृᳬहक्षत्रन्दृᳬहायुर्दृᳬहप्रजान्दृᳬह ॥ ३ ॥ विष्णोः
कर्म्माणि । पश्यतयतोव्रतानिपस्पशे ॥ इन्द्रस्ययुज्यः सखा ॥ ४ ॥
तद्विष्णोः । परमम्पदᳬसदापश्यन्तिसूरयः ॥ दिवीवचक्षुराततम्
॥ ५ ॥ परिवीरसि ॥ परिवीरसिपरित्त्वादेवीर्विशोव्ययन्ताम्परीम
ᳬयजमानᳬरायोमनुष्याणाम् ॥ दिवः सूनुरस्येषतेपृथिव्याँल्लोकऽ
आरण्यस्तेपशुः ॥ ६ ॥ [ ६ ] उपावीरसि ॥ उपावीरस्युपदेवान्दैवी

विशःप्प्रागुरुशिजोव्वह्नितमान् ॥ देवंत्वष्टर्व्वसुरमहव्यातेस्वदन्ता
म् ॥ ७ ॥ रेवतीरमध्वम् ॥ रेवतीरमध्वम्बृहस्प्पतेधारयाव्वसूनि ॥
ऋतस्यत्त्वादेवहविःपाशेनप्प्रतिमुञ्चामिधर्षामानुषः ॥ ८ ॥ देवस्य
त्त्वा । सवितुःप्प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अग्नी
षोमाभ्याञ्जुष्टन्नियुनज्मि ॥ अद्भ्यस्त्वौषधीभ्योनुत्त्वामातामन्य
तामनुपितानुभ्भ्रातासगर्भ्योनुसखासयूत्थ्यः ॥ अग्नीषोमाभ्या
न्त्वाजुष्टम्प्रोक्षामि॥९॥अपाम्पेरुः॥ अपाम्पेरुरस्यापोदेवीःस्वदन्तु

स्यात्ताश्चित्सहैवहुविः ॥ सन्तैप्राणोवातैनगच्छताꣳसमङ्गानियज
त्रैःसंय्यज्ञपतिराशिषा॥१०॥ घृतेनाक्तौ। पशूँस्त्रायेथाꣳरेवतियज
मानेप्रियन्धाऽआविंश ॥ उरोरन्तरिक्षात्सजूर्देवेन वातेनास्यहवि
पस्त्मनायजसमस्यतन्वाभव॥ वर्षोवर्षीयसियज्ञेयज्ञपतिन्धाःस्वा
हादेवेभ्योदेवेभ्यःस्वाहा॥११॥[५]माहिः॥ माहिर्भूर्म्मापृदा
कुर्न्नमस्तऽआतानानर्वाप्रेहि॥ घृतस्यकुल्याऽउपऋतस्यपथ्याऽअ
नु॥१२॥ देवीरापः॥ शुद्धावोढꣳसुपरिविष्टादेवेषुसुपरिविष्टावयम्प

रिवेष्टारोभूयास्म ॥ १३ ॥ वाचन्ते ॥ वाचन्तेशुन्धामिप्प्राणन्तेशु
न्धामिचक्षुस्तेशुन्धामिश्श्रोत्रन्तेशुन्धामिनाभिन्तेशुन्धामिमेढ्
न्तेशुन्धामिपायुन्तेशुन्धामिचरित्राँस्तेशुन्धामि ॥ १४ ॥ मनस्ते ॥
मनस्तऽआप्प्यायताँवाक्कऽआप्प्यायताम्प्राणस्तऽआप्प्यायताञ्च
क्षुस्तऽआप्प्यायताँश्श्रोत्रन्तऽआप्प्यायताम् ॥ यत्तेक्क्रूरंयदास्थि
तन्तत्तऽआप्प्यायतान्निष्ट्यायतान्तत्तेशुद्ध्यतुशमहोब्भ्यः ॥ ओष
धेत्रायस्वस्वधितेमैनꣳहिꣳसीः ॥ १५ ॥ रक्षसाम्भागशा रक्षसाम्भागो

सिनिरस्तꣳरक्षऽइदमहꣳरक्षोऽभितिष्ठामीदमहꣳरक्षोऽवबाधऽइदम
हꣳरक्षोऽधमन्तमोनयामि ॥ घृतेनद्यावापृथिवीप्प्रोर्णुवाथांवायोवे
स्तोकानामग्निराज्यस्यवेतुस्वाहास्वाहाकृतेऽऊर्द्ध्वनभसम्मारुतङ्ग
च्छतम्॥१६॥ इदमापः॥ इदमापःप्प्रवहतावद्यञ्चमलंचयत्॥यच्चा
भिदुद्रोहानृतंय्यच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपव
मानश्चमुञ्चतु॥१७॥[६]सन्ते॥सन्तेमनोमनसासम्प्राणःप्प्राणेन
गच्छताम्॥रेडस्यग्निष्ट्वाश्रीणात्वापस्त्वासमरिणन्वातस्यत्वाद्ध्राज्यै

पूष्णोरꣳहाऽऊष्मणोव्यथिपुसयुतन्द्वेषं÷ ॥ १८ ॥ घृतङ्घृतपावा
नः ॥ घृतङ्घृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यह
विरसिस्वाहा ॥ दिशं÷प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः
स्वाहा ॥ १९ ॥ ऐन्द्रःप्प्राणः ॥ ऐन्द्रःप्प्राणोऽअङ्गेऽअङ्गेनिदीद्ध्य
दैन्द्रऽउदानोऽअङ्गेऽअङ्गेनिधीतः ॥ देवस्यत्वष्टुर्भूरितेसꣳसमेतुस
लक्ष्मायद्विषुरूपम्भवाति ॥ देवत्रायन्तमवसेसखायोनुत्वामाता
पितरोमदन्तु ॥ २० ॥ [३] समुद्रङ्गच्छ ॥ समुद्रङ्गच्छस्वाहान्तरि

क्षङ्गच्छस्वाहादिवꣳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वाहा
होरात्रेगच्छस्वाहाच्छन्दाꣳसिगच्छस्वाहाद्यावापृथिवीगच्छस्वा
हायज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहादिव्यन्नभोगच्छस्वाहाग्निंवै
श्वानरङ्गच्छस्वाहामनोमेहार्दियच्छदिवन्तेधूमोगच्छतुस्वर्ज्ज्योती
र्तिःपृथिवीम्भस्मनापृणस्वाहा॥२१॥मापं॥मापोमौषधीर्हिꣳसी
र्द्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च॥यदाहुरघ्न्याऽइतिवरुणेति
शपामहेततोवरुणनोमुञ्च॥सुमित्रियानऽआपऽओषधयःसन्तुदु

संहि. पू. अ.
४० ॥ ॥ ६ ॥

र्म्मित्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥२२॥[२]
हविष्म्मतीरिमा ॥ हविष्म्मतीरिमाऽआपोहविष्म्माँ२ऽआविवा
सति ॥ हविष्म्मान्देवोऽअध्वरोहविष्म्माँऽअस्तुसूर्य्यः ॥ २३ ॥
अग्नेर्वः ॥ अग्नेर्वोपन्नगृहस्यसदसिसादयामीन्द्राग्ग्न्योर्भागधे
यीस्त्थमित्रावरुणयोर्भागधेयीस्त्थविश्वेषान्देवानाम्भागधेयी
स्त्थ ॥ अमूर्य्याऽउपसूर्य्येयाभिर्व्वासूर्य्यःसह ॥ तानोहिन्न्वन्त्वद्ध्व ॥ ४० ॥
रम् ॥२४॥[२]हृदेत्त्वामनसेत्त्वादिवेत्त्वासूर्य्यायत्त्वा ॥ ऊर्द्ध्वमि

ममंद्धुरान्दुविदेवेषुहोत्रांयच्छ ॥ २५ ॥ सोमंराजन् ॥ सोमंराजन्वि
श्वास्त्वम्प्रजाऽउपावरोहविश्वास्त्वाम्प्रजाऽउपावरोहन्तु ॥ शृणो
त्वग्निःसमिधाहवम्मेशृण्वन्त्वापोधिषणाश्चदेवीः ॥ श्रोताग्रावा
णोविदुषोनयज्ञᳪंशृणोतुदेवःसविताहवम्मेस्वाहा ॥ २६ ॥ देवीरा
पः ॥ देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदि
न्तमः ॥ तन्देवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषाम्भागस्थस्वाहा
॥ २७ ॥ कार्षिरसि ॥ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥

समापौऽअद्भिरग्ग्मतुसमोषधीभिरोषधीः॥२८॥ यमंग्ग्ने ॥ यमंग्ग्ने
पृत्सुमर्त्त्युमवावाजेषुयञ्जुनाः ॥ सयन्ताशश्वतीरिषःस्वाहा ॥२९॥
[५] देवस्यत्त्वा ॥ देवस्यत्त्वासवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णो
हस्ताब्भ्याम् ॥ आददेरावासिगभीरमिममद्ध्वरङ्कृधीन्द्रायसुषूतम
म॥ उत्तमेनपविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्ग्राब्भ्यास्त्थदे
वश्रुतस्तर्प्पयतमामनोमे ॥ ३० ॥ मनोमे । तर्प्पयतवाचम्मेतर्प्पयत
प्प्राणम्मेतर्प्पयतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मेतर्प्पयतात्त्मानम्मेतर्प्प

यतप्प्रजाम्मैतर्प्पयतपशून्मैतर्प्पयतगणान्मैतर्प्पयतगणामेमाबि
तृंपन् ॥३१॥ इन्द्रायत्त्वा ॥ इन्द्रायत्त्वावसुमतेरुद्रवंतऽइन्द्रायत्त्वा
दित्त्यवंतऽइन्द्रायत्त्वाभिमातिग्घ्ने ॥ श्येनायंत्त्वासोमभृतेग्नये
त्वारायस्प्पोषदे ॥३२॥ यत्ते । सोमदिविज्ज्योतिर्यत्पृथिव्यांय्यदु
रावन्तारिक्षे । तेनास्म्मैयजमानायोरुरायेकृध्यधिदात्रेवोचऽ ॥३३॥
श्वात्रास्त्थ ॥ श्वात्रास्त्थवृत्रतुरोराधोगूर्ताऽअमृतस्यपत्नीऽ ॥ तादे
वीर्द्देवत्रेमंय्यज्ञन्नयतोपहूताऽसोमस्यपिबत ॥३४॥ माभेऽ ॥ माभे

स्मांसंविक्था ऽऊर्ज्जन्धत्स्वाधिषणेवीड्वीसतीवीडयेथामूर्ज्जन्दधाथा
म्॥ पाप्मा हुतोनसोमः॥३५॥प्रागपाक्॥ प्रागपागुदगधराक्सर्वत
स्त्वादिशआधावन्तु॥ अम्बानिष्पररसमरीर्विदाम्॥३६॥ त्वमङ्ग॥
त्वमङ्गप्रशꣳसिषोदेवःशविष्ठमर्त्यम्॥नत्त्वदन्योमघवन्नस्तिमर्डि
तेन्द्रब्रवीमितेवचः॥३७॥॥८॥ इतिश्रीवाजसनेयसंहितायांषष्ठोऽ
ध्यायः।६। श्रीवेदपुरुषायनमः॥अनुवाकसूत्रम्। वाचस्पतयेउपया
मगृहीतोसित्रिकावावायोयंवाद्विकोयस्तएकाप्राणायतिस्त्रोमघव

इंद्राग्नीआगतमाद्यौमासश्चर्षणीधृतोविश्वेदेवासऽआगतेंद्रंमरुत्वो
मरुत्वंतंवृषभंमरुत्वांतौजसेसजोषाइंद्रमरुत्वाँ२इंद्रमहाँ२ इंद्रोम
हाँ२इंद्रएकैकोदुत्यमष्टौपंचविꣳशतिरष्टाचत्वारिꣳशत्॥ हरिःॐ
वाचस्पतये ॥ वाचस्पतयेपवस्ववृष्णोऽअꣳशुभ्याङ्गभस्तिपू
तः ॥ देवोदेवेभ्यःपवस्वयेषाम्भागोसि ॥१॥ मधुमतीर्न्नः ॥ मधु
मतीर्न्नऽइषस्कृधियत्तेसोमादाभ्यन्नामजागृवितस्मैतेसोमसोमा
यस्वाहास्वाहोर्वंतरिक्षमन्वेमिस्वाङ्कृतोसि ॥२॥ स्वाङ्कृतोसि। विश्वे

भ्यऽइंद्रियेभ्योदिव्येभ्यऽपार्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासुभ
वसूर्य्यायदेवेभ्यस्त्वामरीचिपेभ्योदेवाꣳ शोयस्म्मैत्वेडेतत्सत्य
मुपरिस्रुताभङ्गेनहतोसौफट्प्राणायत्त्वाव्यानायत्त्वा ॥३॥ [३] उप
यामगृहीतोसि ॥ उपयामगृहीतोस्यन्तर्य्यच्छमघवन्पाहिसोमम् ॥
उरुष्ययरायऽएषोयजस्व ॥४॥ अन्तस्ते ॥ अन्तस्तेद्यावापृथिवीदधा
म्यन्तर्द्दधाम्म्युर्व्वन्तरिक्षम् ॥ सजूर्देवेभिरवरैःपरैश्चान्तर्य्यामेमघ
वन्मादयस्व ॥५॥ स्वाङ्कृतोसि ॥ स्वाङ्कृतोसिविश्वेभ्यऽइन्द्रियेभ्यो

दिव्येभ्यऽपार्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासुभवसूर्य्यायदेवेभ्य
स्त्वामरीचिपेभ्यंऽउदानायत्त्वा ॥ ६ ॥ [ ३ ] आवांयो ॥ आवांयो
भूपशुचिपाऽउपनःसहस्रन्तेनियुतोविश्ववार ॥ उपोतेऽअन्धोमद्य
मयामियस्यदेवदधिषेपूर्वपेयंवायवेत्त्वा॥७॥इन्द्रवायूऽइमे । सुताऽ
उपप्रयोभिरागतम्॥ इन्दवोवामुशन्तिहि॥ उपयामगृहीतोसिवाय
वऽइन्द्रवायुभ्यान्त्वैषतेयोनिःसजोषोभ्यान्त्वा ॥ ८ ॥ [२] अयं
वाम् ॥ अयंवांम्मित्रावरुणासुतःसोमऽऋतावृधा ॥ ममेदिहश्रुतः

हवम् ॥ उपयामगृहीतोसिमित्रावरुणाभ्यान्त्वा ॥ ९ ॥ रायावय
म् ॥ रायावयꣳससवाꣳसोमदेमहव्येनदेवायवसेनगावः ॥ तान्धेनु
म्मित्रावरुणायुवन्नोविश्वाहाधत्तमनपस्फुरन्तीमेषतेयोनिर्ऋता
युभ्यान्त्वा ॥ १० ॥ [२] यावाम् ॥ यावाङ्कशामधुमत्त्यश्विनासूनृता
वती ॥ तयायज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विभ्यान्त्वैषते
योनिर्म्माद्ध्वीभ्यान्त्वा ॥ ११ ॥ [१] तम्प्रत्कथा । पूर्वथाविश्वथे ॥ ४४
मथाज्येष्ठतातिम्बर्हिषदꣳस्वर्विदम् ॥ प्रतीचीनंवृजनन्दोहसेधुनिं

माशुञ्जयन्तमनुयासुवर्द्धसे ॥ उपयामगृहीतोसिशण्डायत्त्वैषतेयो
निर्व्वीरतांम्पाहयपमृष्टःशण्डोदेवास्त्वाशुक्रपाःप्प्रणयन्त्वनाधृष्टा
सि॥१२॥सुवीरोवीरान्॥सुवीरोवीरान्प्रजनयन्परीह्यभिरायस्प्पो
षेणयजमानम् ॥ सञ्जग्मानोदिवापृथिव्याशुक्रःशुक्रशोचिषानिर
स्तःशण्डःशुक्रस्याधिष्ठानमसि ॥ १३ ॥ अच्छिन्नस्यते । देवसोम
सुवीर्य्यस्यरायस्प्पोषस्यददितारःस्याम ॥ साप्प्रथमासंस्कृतिर्व्विश्व
वारासप्प्रथमोव्वरुणोमित्रोऽअग्निः ॥१४॥ सप्प्रथमः ॥ सप्प्रथमोबृ

हृस्पतिंश्चिकित्वाँस्तस्माऽइन्द्रायसुतमाजुंहोतस्वाहां ॥तृम्पन्तुहो
त्रामध्वोयाःस्विष्टायाःसुप्रीताःसुहुतायत्स्वाहायाडग्नीत् ॥ १५॥
[४] अयंवेनऽ ॥ अयंवेनश्चोदयत्पृश्निगर्भाज्ज्योतिर्ज्जरायूरजसो
विमाने ॥ इममपाᳪसंङ्गमेसूर्य्यस्यशिशुन्नविप्प्रामतिभीरिहन्ति ॥
उपयामगृहीतोसिमर्कायत्त्वा ॥ १६॥ मनोन । येषुहवनेषुतिग्मं
विपऽशङ्कयावनुथोद्रवन्ता ॥ आयःशर्य्याभिस्तुविनृम्णोऽअस्या ॥ ४५ ॥
श्रीणीतादिशङ्गभस्तावेषतेयोनिः प्रजाःपाह्यपमृष्टोमर्कोदेवा

स्त्वामन्थिपाःप्प्रणयन्त्वनाधृष्टासि ॥ १७ ॥ सुप्प्रजाःप्प्रजाःप्प्र
जनयन्परीह्युभिरायस्प्पोषेणयजमानम् ॥ सञ्जग्म्मानोदिवापृथि
व्यामन्थीमन्थिशोचिषानिरस्तोमर्कोमन्थिनोधिष्ठानमसि॥१८॥
[३] येदेवासः ॥ येदेवासोदिव्व्येकादशस्त्थपृथिव्व्यामद्ध्येकादश
स्त्थ ॥ अप्प्सुक्षितोमहिनैकादशस्त्थतेदेवासोयज्ञमिमञ्जुषद्ध्व
म् ॥ १९ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याग्ग्रयणोसिस्वा
ग्ग्रयणः ॥ पाहियज्ञम्पाहियज्ञपतिंविष्ष्णुस्त्वामिन्द्रियेणपातु

विष्णुन्त्वम्पाह्यभिसवनानिपाहि ॥२०॥ सोमः पवते ॥ सोमः प
वतेसोमः पवतेस्मैब्रह्मणेस्मैक्षत्रायास्मैसुन्वतेयजमानायप
वतऽइषऽऊर्जेपवतेद्भ्यऽओषधीभ्यः पवतेद्यावापृथिवीभ्याम्पवते
सुभूतायपवतेविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवे
भ्यः ॥ २१ ॥ [३] उपयामगृहीतोसि । उपयामगृहीतोसीन्द्राय
त्वाबृहद्वतेवयस्वतऽउक्थाव्यङ्गृह्णामि ॥ यत्तऽइन्द्रबृहद्वयस्तस्मै
त्वाविष्णवेत्वैषतेयोनिरुक्थेभ्यस्त्वादेवेभ्यस्त्वादेवाव्यंयज्ञ


॥ ४६

स्यायुंषेगृह्णामिमित्रावरुणाऽभ्यान्त्वा ॥ २२ ॥ मित्रावरुणाऽभ्या
न्त्वा । देवाव्यंऽयुज्ञस्यायुंषेगृह्णामीन्द्रायत्त्वादेवाव्यंऽयुज्ञस्यायुंषे
गृह्णामीन्द्राग्निभ्यान्त्वादेवाव्यंऽयुज्ञस्यायुंषेगृह्णामीन्द्रावरुणा
ऽभ्यान्त्वादेवाव्यंऽयुज्ञस्यायुंषेगृह्णामीन्द्राबृहस्प्पतिऽभ्यान्त्वादे
वाव्यंऽयुज्ञस्यायुंषेगृह्णामीन्द्राविष्णुंऽभ्यान्त्वादेवाव्यंऽयुज्ञस्यायुं
षेगृह्णामि ॥ २३ ॥ [२] मूर्द्धानंन्दिवऽ ॥ मूर्द्धानंन्दिवोऽअरतिम्पृथि
व्यावैश्वानुरमृतऽआजातमग्निम् ॥ कुविंꣳसम्म्राजुमतिथिञ्जनांना

वीरैᳬसुपोषᳬपोषैः ॥ २९ ॥ [३] उपयामगृहीतोसि ॥ उपयामगृही
तोसिमधवेत्त्वोपयामगृहीतोसिमाधवायत्त्वोपयामगृहीतोसिशु
क्रायत्त्वोपयामगृहीतोसिशुचयेत्त्वोपयामगृहीतोसिनभसेत्त्वोपया
मगृहीतोसिनभस्यायत्त्वोपयामगृहीतोसीषेत्त्वोपयामगृहीतोस्यू
र्जेत्त्वोपयामगृहीतोसिसहसेत्त्वोपयामगृहीतोसिसहस्यायत्त्वोपया
मगृहीतोसितपसेत्त्वोपयामगृहीतोसितपस्यायत्त्वोपयामगृहीतो ॥ ४९ ।
स्यᳬहसस्पतयेत्त्वा ॥ ३० ॥ [१] इन्द्राग्नीऽआगतम् ॥ इन्द्रा

ग्न्नांऽआगतᳬसुतङ्गीर्भिर्न्नभोवरेण्यम् ॥ अस्यपातन्धियेषिता ॥
उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्निभ्यान्त्वा
॥ ३१ ॥ [ १ ॥ आघं ॥ आघायेऽअग्निमिन्धतेस्तृणन्तिबर्हिरानुष
क् ॥ येषामिन्द्रोयुवासखा ॥ उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैष
तेयोनिरग्नीन्द्राभ्यान्त्वा ॥ ३२ ॥ [ १ ] ओमासश्चर्षणीधृतᳬ ॥ ओ
मासश्चर्षणीधृतोविश्वेदेवासऽआगत ॥ दाश्वाᳬसोदाशुषᳬसुतम् ॥
उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्य

संहि॰ स्त्वादेवेभ्यः ॥ ३३ ॥ [ १ ] विश्वेदेवासः ॥ विश्वेदेवासऽआगतश्शृ पू॰ अ॰
॥ ४९ ॥ णुतामऽइमꣳहवम् ॥ एदम्बर्हिर्निषीदत ॥ उपयामगृहीतोसिविश्वे ॥ ७ ॥
भ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ ३४ ॥ [ १ ]
इन्द्रमरुत्वः ॥ इन्द्रमरुत्वऽइहपाहिसोमंयथाशार्य्यातेऽअपिबः
सुतस्य ॥ तवप्रणीतीतवशूरशर्म्मन्नाविवासन्तिकवयः सुयज्ञाः ॥
उपयामगृहीतोसीन्द्रायत्वामरुत्वतऽएषतेयोनिरिन्द्रायत्वामरु ॥ ४९ ॥
त्वते ॥ ३५ ॥ [ १ ] मरुत्वन्तंवृषभंवावृधानमकवारिन्दिव्यꣳशा

सांमेन्द्रंम् ॥ विश्वासाहमवंसेनूतंनायोग्रꣳसंहोदामिहतꣳहुवेम ॥
उपयामगृंहीतोसीन्द्रांयत्त्वामरुत्त्वंतऽएषतेयोनिरिन्द्रांयत्त्वामरु
त्त्वंते ॥ [ १ ] उपयामगृंहीतोसिमरुतान्त्वौजंसे ॥ ३६ ॥ [१] सजो
षाऽइन्द्र ॥ सजोषांऽइन्द्रसगंणोमरुद्भिःसोमंम्पिबवृत्रहाशूरविद्वा
न् ॥ जहिशत्रूँ १ रपमृधोंनुदस्वाथाभंयङ्कृणुहिविश्वतोंनः ॥ उपया
मगृंहीतोसीन्द्रांयत्त्वामरुत्त्वंतऽएषतेयोनिरिन्द्रायत्त्वामरुत्त्वंते
॥ ३७ ॥ [१] मरुत्त्वाँ २ ऽइन्द्र । वृषभोरणांयापिबासोमंमनुष्वधं

म्मदाय ॥ आसिञ्चस्वजठरेमध्वंऽऊर्म्मिन्त्वꣳराजासिप्प्रतिपत्सुता
नाम् ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्राय
त्त्वामरुत्त्वते ॥ ३८ ॥ [१] महाँ२ऽइन्द्रं÷ ॥ महाँ२ऽइन्द्रोनृवदाच
र्षणिप्प्राऽउतद्विबर्हाऽअमिनꣳसहोभिꣳ ॥ अस्म्मद्र्य्यग्वावृधेवी
र्य्यायोरुꣳपृथुꣳसुकृतꣳकर्त्तृभिर्भूत् ॥ उपयामगृहीतोसिमहेन्द्राय
त्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥ ३९ ॥ [१] महाँ२ऽइन्द्रं÷ ॥ महाँ२ऽइ
न्द्रोयऽओजसापर्ज्जन्न्योवृष्टिमाँ२ऽइव ॥ स्तोमैर्व्वत्सस्यवावृधे ॥ उप

यामगृहीतोसिमहेन्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ ४० ॥ [ १ ]
उदुत्यम् ॥ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवं÷ ॥ दृशेविश्वायसू
र्य्यंᳫस्वाहा ॥ ४१ ॥ चित्रन्देवानाम् ॥ चित्रन्देवानामुदगादनीक
ञ्चक्षुम्मित्रस्यवरुणस्याग्नेऽ ॥ आप्प्राद्यावापृथिवीऽअन्तरिक्षᳫसू
र्य्यऽआत्त्माजगतस्तस्थुषश्चस्वाहा ॥ ४२ ॥ अग्नेनय । सुपथाऽरा
येऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोद्ध्यस्म्मज्जुहुराण
मेनोभूयिष्ठान्तेनमऽउक्तिविधेमस्वाहा ॥ ४३ ॥ अयन्नं÷ ॥ अयन्नो

ऽअग्निर्व्वरिवस्कृणोत्वयम्मृधः पुरऽएतुप्प्रभिन्दन् ॥ अयंव्वाजाञ्ज
यतुव्वाजंसातावयꣳशत्रूञ्जयतुजर्हृषाणꣳस्वाहा ॥ ४४ ॥ रूपेणवꣳ॥
रूपेणंवोरूपमꣳभ्यागान्तुथोवोव्विश्ववेदाव्विभजतु ॥ ऋतस्यपथाप्रे
तचन्द्रदक्षिणाव्विस्वꣳपश्यꣳव्यन्तरिक्षंय्यतस्वसदस्यैः ॥ ४५ ॥ ब्राह्म
णमद्य । व्विदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳसुधातुदक्षिणम् ॥
अस्मद्राताद्देवत्रागच्छतप्रदातारमाविशत ॥ ४६ ॥ अग्नयेत्त्वा ॥
अग्नयेत्त्वामह्यंव्वरुणोददातुसोमृतत्त्वमशीयायुर्दात्रऽएधिमयो

मह्यंम्प्रातिग्ग्रहीत्रेरुद्रायत्त्वामह्यंवरुणोददातुसोमृतत्त्वमंशीय
प्प्राणोदात्रऽएधिवयोमह्यंम्प्रातिग्ग्रहीत्रेबृहस्प्पतयेत्त्वामह्यंवरुणो
ददातुसोमृतत्वमंशीयत्त्वग्ग्दात्रऽएधिमयोमह्यंम्प्रातिग्ग्रहीत्रेयमा
यत्त्वामह्यंवरुणोददातुसोमृतत्त्वमंशीयहयोदात्रऽएधिवयोमह्यं
म्प्रातिग्ग्रहीत्रे॥४७॥ कोदात् ॥ कोदात्कस्म्माऽअदात्कामोदात्का
मायादात् ॥ कामोदाताकामः प्प्रातिग्ग्रहीताकामैतत्ते ॥४८॥[८]
॥२५॥ इतिश्रीवाजसनेयसंहितायांसप्तमोऽध्यायः ॥७॥ श्रीवेदपुरु

पायनमः ॥ अनुवाक्सूत्रम् ॥ उपयामगृहीतोस्यादित्येभ्यःपंचवाम मघ्वद्धेसुशर्मास्येकाबृहस्पतिसुतस्यद्वेहरिरसिचतस्रःसमिन्द्रेणाष्टौ माहिरेजतुदशमास्यःपंचकावातिष्ठयुक्ष्वाहींद्रामिदेकैकायस्मान्नद्वे ग्नेपवस्वोत्तिष्ठन्नऽइत्थमुदुत्यमेकैकाजिघ्रद्वेविनइंद्रवाचस्पतिंविश्व कर्मन्नेकैकाग्नयेत्वाचतस्रइहरतिस्तिस्रःपरमेष्ठीदशत्रयोविᳬशति त्रिषष्टिः ॥ हरिःॐउपयामगृहीतोसि ॥ उपयामगृहीतोस्यादित्त्ये ब्भ्यस्त्वा ॥ विष्णऽउरुगायैषतेसोमस्तᳬरक्षस्वमात्त्वादभन् ॥ १ ॥

कदाचन । स्तरीरंसिनेन्द्रंसश्चसिदाशुषे ॥ उपोपेन्नुमंघवन्भूयऽइन्नु
तेदानंन्देवस्यंपृच्यतऽआदित्येभ्यंस्त्वा ॥ २॥ कदाचन । प्प्रयुंच्छ
स्युभेनिपासिजन्मंनी ॥ तुरीयादित्त्युसनंवन्तऽइन्द्रियमातंस्त्था
वमृतन्दिव्याऽऽदित्त्येभ्यंस्त्वा ॥ ३ ॥ यज्ञोदेवानांम् ॥ यज्ञोदेवाना
म्प्रत्त्यैतिसुम्नमादित्यासोभवंतामृडयन्तं÷ ॥ आवोर्वाचीसुमति
वैवृत्त्यादंहोश्चिद्यावंरिवोवित्तरासंदादित्येभ्यंस्त्वा ॥ ४॥ विवंस्व
न्नादित्य ॥ विवस्वन्नादित्त्यैषतेंसोमपीथस्तस्मिन्मत्स्व ॥ श्रदंस्मै

नरोव॑र्चसेद॒धात॒नय॑दा॒शीर्दादम्प॑तीवा॒मम॑श्नु॒तः ॥ पुमा॒न्पु॒त्रोजा॑
यते॒विन्द॑ते॒वस्व॒धावि॒श्वाहा॑रु॒पऽएंधते॒गृहे ॥५॥ [५] वा॒मम॒द्य । संवि
त॒र्वा॒मम॒ श्वोदि॒वेदि॑वेवा॒मम॒स्मभ्यंसावीः ॥ वा॒मस्य॒हिक्षयस्य दे
वभूरे॑रया॒धिया॑वा॒म॒भाज॑ःस्याम॥६॥ उ॒प॒या॒मगृ॑हीतो॒सि। सावि॒त्रो
सिचनो॒धा श्च॒नो॒धाऽअ॑सि॒चनो॒मयि॑धेहि ॥ जिन्व॑य॒ज्ञंजिन्व॑य॒ज्ञप॑
तिम्भगा॑यदे॒वाय॒त्त्वासवि॒त्रे ॥ ७॥ [ २ ] शतम् ॥ ३०० ॥ उ॒प॒या॒म
गृ॑हीतोसि । सु॒शर्म्मा॑सिसु॒प्प्रति॒ष्ठानो॒बृ॒हदु॑क्षाय॒नम॑ः ॥ वि॒श्वेभ्य

स्त्वादेवेभ्यऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यः॥ ८॥ [ १ ] उप
यामगृहीतोसि ॥ उपयामगृहीतोसिबृहस्प्पतिसुतस्यदेवसोमतऽइ
न्दोरिन्द्रियावतःपत्नीवतोग्ग्रहाँ२ऽऋध्यासम् ॥ अहम्परस्तादहम
वस्ताद्यदन्तरिक्षन्तदुमेपिताभूत् ॥ अहꣳसूर्य्यमुभयतोददर्शाह
न्देवानाम्परमङ्गुहायत् ॥९॥ अग्नाँ ३ ऽइपत्नीवन् ॥ अग्नाँ ३ ऽइ
पत्नीवन्त्सजूर्द्देवेनत्त्वष्ट्रासोमम्पिबस्वाहा ॥ प्रजापतिर्वृषासिरेतो
धारेतोमयिधेहिप्रजापतेस्तेवृष्णोरेतोधसोरेतोधामशीय॥१०॥[२]

उपयामगृहीतोसि ॥ उपयामगृहीतोसिहरिरसिहारियोजनोहरि
भ्यान्त्वा ॥ हर्य्योर्द्धानास्त्थसहसोमाऽइन्द्राय ॥ ११ ॥ यस्ते ।
ऽअश्वसनिर्भक्षोयोगोसनिस्तस्यतऽइष्टयजुषऽस्तुतस्तोमस्यशस्तो
क्थस्योपहूतस्योपहूतोभक्षयामि॥१२॥देवकृतस्यैनसः॥ देवकृतस्यै
नसोवयजनमसिमनुष्ष्यकृतस्यैनसोवयजनमसिपितृकृतस्यैनसो
वयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽएनसोवयजनमसि ॥
यच्चाहमेनोविद्वाँश्चकारयच्चाविद्वाँस्तस्यसर्व्वस्यैनसोवयजनमसि

॥१३॥ संवर्च्चसा ॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासꣳशि
वेन॥त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥१४॥[४]
समिन्द्र । णोमनसानेषिगोभिःसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्या ॥
सम्ब्रह्मणादेवकृतंय्यदस्तिसन्देवानाꣳसुमतौयज्ञियानाꣳस्वाहा
॥ १५ ॥ संवर्च्चसा ॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासꣳ
शिवेन । त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम् ॥१६॥
धातारातिः । सवितेदञ्जुषन्ताम्प्रजापतिर्निधिपादेवोऽअग्निः ॥ त्व

ष्टाविष्णुं÷प्प्रजयांसᳬरराणायजंमानायद्द्रविणन्दधातुस्वाहां

॥ १७ ॥ सुगावं÷ ॥ सुगावौदेवाꣳसदंनाऽअकर्म्मयऽआंजुग्मेदᳬस

वंनञ्जुषाणाः ॥ भरंमाणाव्वहंमानाहुवीᳫंष्ष्यस्म्मेधंत्तवसवोव्वसूंनि

स्वाहां ॥ १८ ॥ यॉं२ऽआवंहः ॥ यॉं२आवंहऽउशुतोदेवदेवॉंस्तान्प्रेरं

यस्वेऽअग्ग्नेसुधस्त्थें ॥ जक्षिवाᳫंसं÷पपिवाᳫंसश्श्वव्विश्श्वेसुंद्धर्म्मंᳫं

स्वरातिष्ठतानुस्वाहां ॥ १९ ॥ वयꣳहि । त्त्वांप्प्रयतियज्ञेऽअस्म्मिन्न

ग्ग्नेहोतारमवृणीमहीह ॥ ऋधंगयाऽऋधंगुताशंमिष्ठाꣳप्प्रजानन्न्य

ज्ञमुपयाहिविद्वान्त्स्वाहा ॥ २० ॥ देवांगातुविदः ॥ देवांगातुविदो
गातुंवित्त्वागातुमित ॥ मनसस्पतऽइमन्देवयज्ञᳪंस्वाहाव्वातेधाः
॥ २१ ॥ यज्ञंयज्ञम ॥ यज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांय्योनिङ्गच्छ
स्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकःसर्व्ववीरस्तञ्जुषस्वस्वाहा
॥ २२ ॥ [८] माहिं÷ ॥ माहिर्भूर्म्मापृदाकुः । उरुᳪंहिराजाव्वरुणश्च
कारसूर्य्यायपन्थामन्वेतवाऽउ ॥ अपदेपादाप्रतिधातवेकरुतापव
क्ताहृदयाविधश्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाश÷ ।२३।

अग्नेरनीकम् ॥ अग्नेरनीकमुपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम्॥ दमेदमेसमिधंय्यक्ष्यग्नेप्प्रतितेजिह्वाघृतमुच्चरण्यत्स्वाहा॥२४॥ समुद्रेते ॥ समुद्रेतेहृदयमप्प्स्वन्तश्सन्त्वाविशन्त्वोषधीरुतापं ॥ यज्ञस्यंत्त्वायज्ञपतेसूक्तोक्तौनमोवाकेविधेमयत्स्वाहा ॥ २५ ॥ देवीरापः॥ देवीरापऽएषवोगर्ब्भस्तꣳसुप्प्रीतꣳसुभृतम्बिभृत॥देवसोमैषतेलोकस्तस्मिञ्छञ्चवक्ष्वपरिचवक्ष्व ॥ २६ ॥ अवभृथनिचम्पुण । निचेरुरसिनिचम्पुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्म्मर्त्य

कृतम्पुरुराव्णोदेवरिषस्पाहिदेवानाꣳसमिदसि ॥ २७ ॥ [५] एजं
तुदशंमास्यः ॥ एजंतुदशंमास्योगर्भोजरायुणासह ॥ यथायंवायुरे
जतियथासमुद्रऽएजति ॥ एवायन्दशमास्योऽअस्रंज्जरायुणासह
॥ २८ ॥ यस्यैते । यज्ञियोगर्भोयस्यैयोनिर्हिरण्ययी ॥ अङ्गान्यन्हु
तायस्यतम्मात्रासमंजीगमꣳस्वाहा ॥ २९ ॥ पुरुदस्मोविषुरूपऽ ॥
पुरुदस्मोविषुरूपऽइन्दुरन्तम्मँहिमानंमनाञ्जधीरः ॥ एकंपदी
न्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानुप्रथन्ताꣳस्वाहा

॥ ३० ॥ मरुतोयस्य ॥ मरुतोयस्यहिक्षयेपाथादिवोविमहसः ॥ ससु
गोपातमोजनः ॥ ३१ ॥ महीद्यौः । पृथिवीचनऽइमंयज्ञम्मिमि
क्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ३२ ॥ [५] आतिष्ठ । वृत्रहन्रथंयु
क्तातेब्रह्मणाहरी ॥ अर्वाचीनꣳसुतेमनोग्ग्रावाकृणोतुवग्नुना ॥ उप
यामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वाषोड
शिने ॥ ३३ ॥ [१] युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा ॥ अथानऽ
इन्द्रसोमपागिरामुपश्श्रुतिञ्चर ॥ उपयामगृहीतोसीन्द्रायत्त्वाषोड

शिनेऽएपतेयोनिरिन्द्रायत्त्वाषोडशिने॥३४॥ [१] इन्द्रमित्॥ इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम्॥ ऋषीणाञ्चस्तुतीरुपयज्ञञ्चमानुषाणाम्॥ उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनेऽएषतेयोनिरिन्द्रायत्त्वाषोडशिने॥३५॥ [१] यस्मान्न। जातःपरोऽअन्योऽअस्तियऽआविवेशभुवनानिविश्वा॥ प्रजापतिःप्रजयासꣳरराणस्त्रीणिज्ज्योतीꣳषिसचतेसषोडशी॥३६॥ इन्द्रश्च। सम्म्राड्वरुणश्चराजातौतेभक्षञ्चक्रतुरग्रेऽएतम्॥ तयोरहमनुभक्षम्भक्षयामिवाग्देवीजुषाणा

न्त्विन्द्वंदं ॥ पुनरूर्ज्जानिवर्त्तस्वसानं÷सहस्रेन्धुक्ष्वोरुधारापयंस्व
तीपुनम्माविशताद्रयिः ॥४२॥इडेरन्ते ॥ इडेरन्तेहव्व्येकाम्म्येचन्द्रे
ज्ज्योतेदितिसरंस्वतिमाहिविश्श्रुति ॥ एतातेऽअग्घ्न्येनामानिदेवे
ब्भ्योमासुकृतम्ब्रूतात् ॥४३॥[२]विनं।ऽइन्द्रमृधोजहिनीचायच्छ
पृतन्न्यतः॥योऽअस्म्माँ २ऽअभिदासत्त्यधरङ्गमयातमं÷॥उपयाम
गृहीतोसीन्द्रायत्त्वाविमृधंऽएषतेयोनिरिन्द्रायत्त्वाविमृधे ॥४४॥
[१]वाचस्पतिं।विश्वकम्माणमूतयेमनोजुवंवाजेऽअद्याहुवेम ॥

सनोविश्वानिहवंनानिजोषद्विश्वशंम्भूरवंसेसाधुकंर्म्मा ॥ उपयाम
गृंहीतोसीन्द्रांयत्त्वाविश्वकंर्म्मणऽएषतेयोनिरिन्द्रांयत्त्वाविश्वकं
र्म्मणे ॥ ४५ ॥ [ १ ] विश्वंकर्म्मन्हविषा ॥ विश्वंकर्म्मन्हविषावर्द्धे
नेनत्त्रातारमिन्द्रंमकृणोरवध्यम् ॥ तस्म्मैविशःसमंनमन्तपूर्वीरयमु
ग्ग्रोविहव्व्योयथासंत् ॥ उपयामगृंहीतोसीन्द्रांयत्त्वाविश्वकंर्म्मणऽ
एषतेयोनिरिन्द्रांयत्त्वाविश्वकंर्म्मणे ॥ ४६ ॥ [ १ ] उपयामगृंहीतो
सि ॥ उपयामगृंहीतोस्यग्नयेंत्त्वागायत्त्रच्छंन्दसंगृह्णामीन्द्रांयत्त्वा

त्रिष्टुप्छन्दसंगृह्णामिविश्वेभ्यस्त्वादेवेभ्योजगच्छन्दसंगृह्णा
म्यनुष्टुप्तेभिगरः॥४७॥ व्रेशीनान्त्वा ॥ व्रेशीनान्त्वापत्मन्नाधू
नोमिकुकूननानान्त्वापत्मन्नाधूनोमिभन्दनानान्त्वापत्मन्ना
धूनोमिमदिन्तमानान्त्वापत्मन्नाधूनोमिमधुन्तमानान्त्वाप
त्मन्नाधूनोमिशुक्रन्त्वाशुक्रआधूनोम्म्यह्नोरूपेसूर्य्यस्यरश्मिषु
॥४८॥ ककुभꣳरूपं ॥ वृषभस्यरोचतेबृहच्छुक्रःशुक्रस्यपुरोगाः
सोमꣳसोमस्यपुरोगाः ॥ यत्तेसोमादाभ्यन्नामजागृवितस्मैत्त्वा

गृह्णामितस्स्मैतेसोमसोमायस्वाहा ॥ ४९ ॥ उशिक्त्वम् ॥ उशिक्त्व
न्देवसोमाग्नेश्प्रियम्पाथोपीहिवशीत्वन्देवसोमेन्द्रस्यप्प्रियम्पा
थोपीह्यस्म्मत्सखात्वन्देवसोमविश्वेषान्देवानाम्प्रियम्पाथोपीहि
॥ ५० ॥ [ ४ ] इहरतिः ॥ इहरतिरिहरमद्ध्वमिहधृतिरिहस्वधृतिः
स्वाहा ॥ उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ॥ रायस्प्पोषम
स्म्मासुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऽऋद्धिः ॥ सत्रस्यऽऋद्धिरस्य
गन्मज्ज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअद्ध्यारुहामाविदाम

देवान्त्स्वुर्ज्योर्तिः ॥ ५२ ॥ युवन्तम् ॥ युवन्तामिन्द्रापर्वतापुरोयु
धायोनंःपृतन्यादपुतन्तामिद्धंतंवज्ज्रैणतन्तामिद्धंतम् ॥ दूरेचुत्ताय
च्छन्त्सद्गहनंयदिनंक्षत् ॥ अस्माकुंशत्रून्परिंशूरविुश्वतोदुर्म्मा
दर्षीष्टविुश्वतंः ॥ भूर्भुवुःस्वः सुप्प्रजाःप्प्रजाभिंःस्यामसुवीरावी
रैःसुपोषाःपोषैंः ॥ ५३ ॥ [ ३ ] परमेष्ठ्यभिधीतःप्प्रजापतिर्वाचि
व्याहृंतायामन्धोऽअच्छैतःसविुतासुन्यांविुश्वकंर्म्मादीक्षायांम्पू
षासोंमुक्रयंण्यामिन्द्रंश्च ॥ ५४ ॥ इन्द्रंश्च । मुरुतंश्चक्रुयायोपोत्थि

तोसुरꣳपुण्यमानोमित्रꣳक्रीतोविष्णुꣳशिपिविष्टऽऊरावासन्नोवि
ष्णुर्न्नरन्धिषꣳप्प्रोह्यमाणꣳसोमꣳ ॥ ५५ ॥ प्प्रोह्यमाणꣳसोमऽआगं
तोवरुणऽआसन्द्यामासन्नोग्ग्निराग्नीध्रऽइन्द्रोहविर्द्धानेथर्वोपावह्रि
यमाणोविश्वेदेवाꣳ ॥ ५६ ॥ विश्वेदेवाꣳ ॥ विश्वेदेवाऽअꣳशुषुन्न्यु
प्तोविष्णुराप्पीतपाऽआप्प्याय्यमानोयमꣳसूयमानोविष्णुꣳस
म्भ्रियमाणोवायुꣳपूयमानꣳशुक्रꣳपूतꣳशुक्रꣳक्षीरश्रीर्म्मन्थीसक्तु
श्रीर्विश्वेदेवाꣳ ॥ ५७॥ विश्वेदेवाꣳ ॥ विश्वेदेवाश्चमसेषून्नीतोसुर्होमे

मायोद्यंतोरुद्रोहूयमानोवातोऽभ्यावृत्तोनृचक्षाःप्रतिख्यातोभ
क्षोभक्ष्यमाणःपितरोनाराशꣳसाःसन्नःसिन्धुः ॥ ५८ ॥ सन्नःसि
न्धुरवभृथायोद्यंतःसमुद्रोऽभ्यवह्रियमाणःसलिलःप्रप्लुतोययोरो
जसास्कभितारजाꣳसिवीर्येभिर्वीरतमाशविष्ठा ॥ यापत्येतेऽअ
प्रतीतासहोभिर्विष्णूऽअगन्वरुणापूर्वहूतौ ॥ ५९ ॥ देवान्दिवम्॥
देवान्दिवमगन्यज्ञस्ततोमाद्रविणमष्टुमनुष्यानन्तरिक्षमगन्यज्ञ
स्ततोमाद्रविणमष्टुपितॄन्पृथिवीमगन्यज्ञस्ततोमाद्रविणमष्टुयङ्क

श्वंलोकमगंन्यज्ञस्ततोमेभद्रमंभूत् ॥ ६० ॥ चतुंस्त्रिꣳशत्तन्तंवोये
वितत्त्रिरेयऽइमंय्यज्ञꣳस्वधयादर्दन्ते ॥ तेषांञ्छिन्नꣳसम्म्वेतद्द
धामिस्वाहाघुम्मोंऽअप्प्येतुदेवान् ॥ ६१ ॥ यज्ञस्यदोहं÷ ॥ यज्ञस्य
दोहोव्वितंतऽपुरुत्रासोऽअंष्टधादिवंमन्वाततान ॥ सयंज्ञधुक्ष्वम
हिंमेप्प्रजायांꣳरायस्प्पोषंविश्श्वमायुंरशीयस्वाहा ॥ ६२ ॥ आपंव
स्व ॥ आपंवस्वहिरंण्यवदश्श्वांवत्सोमवीरवंत् ॥ वाजन्नोमंन्तमाभंर
स्वाहा ॥ ६३ ॥ [१०] ॥ २३ ॥ इतिश्रीवाजसनेयसंहितायांअष्टमो

ऽध्यायः ॥ ८ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ देवसवित
श्चतस्त्रइंद्रस्यवज्रःपंचदेवस्याहंदशापयेतिस्रोवाजस्येममष्टावग्निरे
काक्षरेणैषतेचतुष्कौसविताद्वेअष्टौचत्वारिᳪशत् ॥ हरिःॐ देवस
वितᳪ ॥ देवसवितᳪप्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योग
न्धर्व्वᳪकेतपूःकेतन्नᳪपुनातुवाचस्प्पतिर्व्वाजन्नᳪस्वदतुस्वाहा ॥ १ ॥
ध्रुवसदन्त्वा । नृषदम्मनःसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृ
ह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ अप्प्सुषदन्त्वाघृतसदंव्यो

मसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्राय
त्त्वाजुष्टतमम् ॥ पृथिवीसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाक
सदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्राय
त्त्वाजुष्टतमम् ॥ २ ॥ अपाᳫँरसम् ॥ अपाᳫँरसमुद्वयसᳫँसूर्य्येस
न्तᳫँसमाहितम् ॥ अपाᳫँरसस्ययोरसस्तंवोगृह्णाम्म्युत्तममुपयाम
गृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम्
॥३॥ग्रहाऽऊर्ज्जाहुतयः॥ ग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्प्रायमतिम्॥

तेषांविशिंप्प्रियाणांवोहमिषमूर्ज्जᳪसमंग्ग्रभमुपयामगृहीतोसी
न्द्रायत्त्वाजुष्टंङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ सम्पृचौ
स्त्थःसम्माभद्रेणपृङ्क्तंविपृचौस्त्थोविमांपाप्मनापृङ्क्तम् ॥ ४ ॥ [ ४ ]
इन्द्रस्यवज्ज्रं÷ ॥ इन्द्रस्यवज्ज्रोसिवाजसास्त्वयायंवाजᳪसेत् ॥
वाजस्यनुप्प्रसवेमातरम्महीमदितिन्नामवचसाकरामहे ॥ यस्या
मिदंविश्श्वम्भुवनमाविवेशतस्यान्नोदेवःसविताधर्म्मसाविषत् ॥ ५ ॥
अप्प्स्वन्तम् ॥ अप्प्स्वन्तरमृतमप्प्सुभेषजमपामुतप्प्रशस्तिष्ष्वश्श्वा

भवंतव्वाजिनं÷ ॥ देवीरापोयोवंऽऊर्म्मिःप्प्रतूर्तिःककुन्मान्वाज
सास्तेनायंव्वाजꣳसेत् ॥ ६ ॥ व्वातोवा ॥ वातोवामनोवागन्धर्व्वाःस
प्तविꣳशतिः ॥ तेऽअग्ग्रेश्श्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः ॥ ७ ॥
वातꣳहाभवव्वाजिन्युज्यमानऽइन्द्रस्येवदक्षिणःश्श्रियैधि ॥ युञ्ज
न्तुत्वामरुतोविश्श्ववेदसऽआतेत्वष्टापत्सुजवन्दधातु ॥ ८ ॥ जवो
यः ॥ जवोयस्तेव्वाजिन्निहितोगुहायःश्श्येनेपरीतोऽअचरच्चव्वाते ॥
तेननोव्वाजिन्बलवान्बलेनव्वाजजिच्चभवसमनेचपारयिष्णुः ॥

वाजिनोवाजजितोवाजꣳसरिष्ष्यन्तोबृहस्प्पतेर्भागमवजिग्घ्रत
॥ ९ ॥ [ ५ ] देवस्याहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यसवसोबृहस्प्प
तेरुत्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्त्यसवसऽइन्द्रस्यो
त्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्रसवसोबृहस्प्पते
रुत्तमन्नाकंमरुहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्रसवसऽइन्द्रस्यो
त्तमन्नाकंमरुहम् ॥ १० ॥ बृहस्प्पतेवाजम् ॥ बृहस्प्पतेवाजञ्जयबृ
हस्प्पतयेवाचंवदतबृहस्प्पतिंवाजञ्जापयत ॥ इन्द्रवाजञ्जयेन्द्राय

वाचंवदतेन्द्रंवाजंज्ञापयत ॥ ११ ॥ एषावं÷ ॥ एषावꣳसासत्यासं
वागंभूद्ययाबृहस्पतिंवाजमजीजपताजीजपतबृहस्पतिंवाजंवनं
स्पतयोविमुंच्यद्ध्वम् ॥ एषावꣳसासत्यासंवागंभूद्ययेन्द्रंवाजमजी
जपताजीजपतेन्द्रंवाजंवनंस्पतयोविमुंच्यद्ध्वम् ॥ १२ ॥ देवस्या
हम् ॥ देवस्याहꣳसवितुःसवेसत्यप्रसवसोबृहस्पतेर्वाजजितोवा
जंजेषम् ॥ वाजिनोवाजजितोद्ध्वनस्कभ्नुवन्तोयोजनामिमानाꣳ
काष्ठांगच्छत ॥ १३ ॥ एषस्यं ॥ एषस्यवाजीक्षिपणिन्तुरण्यतिग्री

वायाम्वद्धोऽअपिकक्षऽआसनि ॥ क्रतुन्दधिक्क्राऽअनुसह्सनिष्प्य
दत्पथामङ्क्राॅ‌ᳪस्यन्वापनीफणत्स्वाहा ॥ १४ ॥ उतस्म्म ॥ उतस्म्मा
स्यद्रवतस्तुरण्यतःपर्ण्णन्नवेरनुवातिप्प्रगर्द्धिनः ॥ श्येनस्येवद्ध्रजतोऽ
अङ्कसम्परिदधिक्क्राव्ण्णः सहोर्ज्जातरित्रतःस्वाहा ॥ १५ ॥ शन्नः ॥
शन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्द्रवःस्वर्क्काः ॥ जम्भयन्तो
हिंवृकᳪरक्षाᳪसिसनेम्म्यस्म्मद्युयवन्नमीवाः ॥ १६ ॥ तेनः ॥ तेनो
ऽअर्वन्तोहवनश्श्रुतोहवंविश्श्वेशृण्वन्तुवाजिनोमितद्द्रवः ॥ सहस्र

सामेधसांतासनिष्ष्यवौमहोयेधनंꣳसमिथेषुंजभ्रिरे ॥ १७॥ वाजे वाजेवत ॥ वाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमद्ध्वंः पिबतमादयंद्ध्वन्तृप्तायातपथिभिर्देवयानैः ॥ १८ ॥ आमावाज स्यप्रसवोजंगम्म्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमांगन्तामपित रांमातराचामासोमोऽअमृतत्वेनंगम्म्यात् ॥ वाजिनोवाजजितो वाजꣳससृवाꣳसोबृहस्पतेर्भागमवजिघ्रतानिमृजानाः ॥ १९ ॥

[१०] आपयेस्वाहा ॥ स्वापयेस्वाहापिजायस्वाहाक्रतवेस्वाहावसं

वेस्वाहांहर्प्पतयेस्वाहान्हैमुग्धायस्वाहामुग्धायवैनꣳशिनायस्वाहा
व्विनꣳशिनऽआन्त्यायनायस्वाहान्त्यायभौवनायस्वाहाभुवनस्य
पतयेस्वाहाधिपतयेस्वाहा ॥ २० ॥ आयुर्य्यज्ञेन । कल्प्पताम्प्राणो
यज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताꣳश्श्रोत्रंय्यज्ञेनकल्प्पताम्पृष्ठं
य्यज्ञेनकल्प्पतांय्यज्ञोयज्ञेनकल्प्पताम् ॥ प्रजापतेःप्प्रजाऽअभूम
स्वर्द्देवाऽअगन्म्मामृताऽअभूम ॥ २१ ॥ अस्म्मेवं÷ ॥ अस्म्मेवोऽअ
स्त्विन्द्रियमस्म्मेनृम्म्णमुतक्क्रतुरस्म्मेव्वर्चाꣳसिसन्तुवः ॥ नमोमा

त्रेपृथिव्यैनमोमात्रेपृथिव्याऽइयन्तेराड्‌यन्तासियमनोध्रुवोसिध
रुणः॥ कृष्यैत्त्वाक्षेमायत्त्वारय्यैत्त्वापोषायत्त्वा॥२२॥[३] वाज
स्येमम् ॥ वाजस्येमम्प्रसवःसुषुवेअग्रेसोमꣳराजानमोषधीष्वप्सु ॥
ताऽअस्मभ्यम्मधुमतीर्भवन्तुवयꣳराष्ट्रेजागृयामपुरोहिताः
स्वाहा ॥ २३ ॥ वाजस्येमाम् । वाजस्येमाम्प्रसवःशिश्रियेदिवमि
माञ्चविश्वाभुवनानिसम्राट् ॥ अदित्सन्तन्दापयतिप्रजानन्त्स
नोरयिꣳसर्ववीरन्नियच्छतुस्वाहा ॥ २४ ॥ वाजस्यनु । प्रसवऽआब

२ भुवेमाचविश्वाभुवनानिसर्व्वतः ॥ सनेमिराजापरियातिविद्वान्प्र
 जाम्पुष्टिँवर्द्धयमानोऽअस्मेस्वाहा ॥ २५ ॥ सोमꣳराजानम् । सोमꣳ
राजानमवसेग्निमन्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्य्यम्ब्रह्मा
णञ्चबृहस्पतिꣳस्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्पतिम् ॥ अर्य्यम
णम्बृहस्पतिमिन्द्रन्दानायचोदय ॥ वाचंविष्णुꣳसरस्वतीꣳसवि
तारञ्चवाजिनꣳस्वाहा ॥ २७ ॥ अग्नेअच्छा ॥ अग्नेअच्छावदेहनऽप्र ॥ ६८ ॥
तिनऽसुमनाभव ॥ प्रनोयच्छसहस्रजित्त्वꣳहिधनदाऽअसिस्वाहा

॥ २८ ॥ प्रनः ॥ प्रनोयच्छत्त्वर्य्यमाप्प्रपूषाप्प्रबृहस्प्पतिः ॥ प्रवा
ग्ग्देवीदंदातुनःस्वाहा ॥ २९ ॥ देवस्यंत्त्वासवितुश्प्प्रसवेश्श्विनोर्बाहु
ब्भ्यांम्पूष्णोहस्ताब्भ्याम् ॥ सरंस्वत्यैव्वाचोयन्तुर्य्यन्त्रियेदधामिबृ
हस्प्पतेष्ट्वासाम्म्राज्येनाभिषिञ्चाम्म्यसौ ॥ ३० ॥ [८] अग्निरेका
क्षरेण । प्प्राणमुदंजयत्तमुज्जेषमश्श्विनौद्व्यक्षरेणद्विपदोमनुष्ष्यानु
दंजयत्तान्तानुज्जेषंव्विष्ष्णुस्त्र्यक्षरेणत्रींल्लोकानुदंजयत्तानुज्जेषꣳ
सोमश्चतुरक्षरेणचतुष्ष्पदःपशूनुदंजयत्तानुज्जेषम्पूषापञ्चाक्षरेण

॥ ३१ ॥ पूषा पञ्चाक्षरेण । पञ्च दिशऽउदजयत्ताऽउज्जेषꣳ सविता षडक्षरेण षडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेण सप्त ग्राम्म्यान्पशूनुदजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम्मित्रो नवाक्षरेण ॥ ३२ ॥ मित्रो नवाक्षरेण । त्रिवृतꣳ स्तोममुदजयत्तमुज्जेषं वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्रऽएकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषं विश्वेदेवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषं वसवस्त्रयोदशाक्षरेण ॥ ३३ ॥ वसवस्त्रयोदशाक्षरेण ।

त्रयोदशꣳस्तोममुदजयँस्तमुज्जेषꣳरुद्राश्चतुर्दशाक्षरेणचतुर्दशꣳ
स्तोममुदजयँस्तमुज्जेषमादित्याःपञ्चदशाक्षरेणपञ्चदशꣳस्तोममु
दजयँस्तमुज्जेषमदितिꣳषोडशाक्षरेणषोडशꣳस्तोममुदजयत्तमुज्जे
षम्प्रजापतिꣳसप्तदशाक्षरेणसप्तदशꣳस्तोममुदजयत्तमुज्जेषम् ॥
॥३४॥[४] एषते। निर्ऋतेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवे
भ्यःपुरःसद्भ्यःस्वाहायमनेत्रेभ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहा
विश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्यो

वामरुन्नेत्रेभ्योवादेवेभ्यंऽउत्तरासद्भ्युःस्वाहासोमनेत्रेभ्योदेवे
भ्यंऽउपरिसद्भ्योदुवस्वद्भ्युःस्वाहा ॥ ३५ ॥ येदेवाऽअग्निनेत्राःपुरः
सदुस्तेभ्युःस्वाहायेदेवायमनेत्रादक्षिणासदुस्तेभ्युःस्वाहायेदेवा
विश्वदेवनेत्राःपश्चात्सदुस्तेभ्युःस्वाहायेदेवामित्रावरुणनेत्रावामु
रुन्नेत्रावोत्तरासदुस्तेभ्युःस्वाहायेदेवाःसोमनेत्राऽउपरिसदोदुव
स्वन्तस्तेभ्युःस्वाहा ॥ ३६ ॥ अग्नेसहस्व ॥ अग्नेसहस्वपृतनाऽअ
भिमातीरपास्य ॥ दुष्टरस्तरन्नरातीर्वर्चोधायज्ञवाहसि ॥ ३७ ॥ देवस्य

त्वा ॥ सवितुश्प्प्रसवेऽश्विनोर्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ उपाᳫं
शोर्व्वीर्य्येणजुहोमिहतᳫंरक्षःस्वाहारक्षसान्त्वावधायावधिष्मर
क्षोवधिष्मामुमसौहतः ॥३८॥ [४]सविताक्त्वाᳫंसवानाᳫंसुवताम
ग्निर्गृहपतीनाᳫंसोमोव्वनस्पतीनाम् ॥ बृहस्पतिर्व्वाचऽइन्द्रोज्ज्यै
ष्ठ्यायरुद्रःपशुब्भ्योमित्रःसत्त्योव्वरुणोधर्म्मपतीनाम् ॥ ३९ ॥ इम
न्देवाः ॥ इमन्देवाऽअसपत्नᳫंसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्याय
महतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्ष्यपुत्रममुष्ष्यैपुत्रम्

स्यैविशऽएषवोमीराजासोमोस्म्माकंम्ब्राह्मणानाᳬंराजा ॥ ४० ॥
[२]॥८॥इतिश्रीवाजसनेयसंहितायांनवमोऽध्यायः ॥९॥श्रीवेदपुरु
षायनमः ॥ अनुवाकसूत्रम ॥ अपोदेवाश्चतस्रःसोमस्यत्त्विषिःपंचा
वेष्टाःसप्त सोमस्यत्वाचतस्रइंद्रस्यवज्रःपंचस्योनासिचतस्रः सवित्रे
काश्विभ्यांचतस्रोष्टौचतुस्त्रिᳬशत् ॥ हरिःॐअपोदेवा१ ॥ अपोदेवा
मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाऽ ॥ याभिर्म्मित्रावरुणा
वभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ वृष्णऽऊर्मिः१ ॥ वृ

ष्णांऽऊर्म्मिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहावृष्णांऽऊर्म्मिरसिराष्ट्रदा
राष्ट्रममुष्म्मैदेहिवृषसेनोसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहावृषसेनोसिरा
ष्ट्रदाराष्ट्रममुष्म्मैदेह्यर्त्थेतस्त्थ ॥ २ ॥ अर्त्थेतस्त्थराष्ट्रदाराष्ट्रम्मेद
त्तस्वाहार्त्थेतस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तौजस्वतीस्त्थराष्ट्रदाराष्ट्र
म्मेदत्तस्वाहौजस्वतीस्त्थराष्ट्रदाराष्ट्रममुष्म्मैदत्तापं÷परिवाहिणी
स्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहापं÷परिवाहिणीस्त्थराष्ट्रदाराष्ट्रममु

ष्मैं दत्तापाम्पतिंरसिराष्ट्रुदाराष्ट्रम्मेदेहि स्वाहापाम्पतिंरसिराष्ट्रुदा
राष्ट्रममुष्मैदेह्यपाङ्गर्भोसिराष्ट्रुदाराष्ट्रम्मेदेहि स्वाहापाङ्गर्भोसि
राष्ट्रुदाराष्ट्रममुष्मैदेहि सूर्य्यत्वचसस्त्थ ॥ ३ ॥ सूर्य्यत्वचसस्त्थ ।
राष्ट्रुदाराष्ट्रम्मेदत्तस्वाहासूर्य्यत्वचसस्त्थराष्ट्रुदाराष्ट्रममुष्मैदत्तसू
र्य्यवर्च्चसस्त्थराष्ट्रुदाराष्ट्रम्मेदत्तस्वाहासूर्य्यवर्च्चसस्त्थराष्ट्रुदाराष्ट्रममु
ष्मैदत्तमान्दास्त्थराष्ट्रुदाराष्ट्रम्मेदत्तस्वाहामान्दास्त्थराष्ट्रुदाराष्ट्र

मुमुष्मैदत्तव्रजक्षितंस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाव्रजक्षितंस्त्थरा
ष्ट्रदाराष्ट्रममुष्मैदत्तवाशाःस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहावाशाःस्थरा
ष्ट्रदाराष्ट्रममुष्मैदत्तशविष्ठास्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाशविष्ठा
स्थराष्ट्रदाराष्ट्रममुष्मैदत्तशक्करीस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाशक्क
रीस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तजनभृतंस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहा
जनभृतंस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तविश्वभृतंस्त्थराष्ट्रदाराष्ट्रम्मैद

त्तस्वाहा॑विश्व॒भृत॑स्त्थरा॒ष्ट्र॒दारा॒ष्ट्र॒म॒मु॒ष्म्मै॑द॒त्ताप॑÷स्व॒राज॑स्त्थरा॒ष्ट्र॒
दारा॒ष्ट्र॒म॒मु॒ष्म्मै॑दत्त ॥ मधु॑मती॒र्म्मधु॑मती॒भिः पृ॒च्यन्ता॒म्महि॑क्ष॒त्त्रङ्क्ष॒
त्त्रिया॑यव॒न्वा॒ना॒ऽअना॑धृष्टाः॒सीद॒तस॒हौज॑सो॒महि॑क्ष॒त्त्रङ्क्ष॒त्त्रिया॑य॒द
धती॑ः॥ ४ ॥ [४] शतम् ॥ ४०० ॥ सोम॑स्य॒त्त्विषि॑÷ ॥ सोम॑स्य॒त्त्विषि
रसि॒तवे॑व॒मे॒त्त्विषि॑र्भूयात् ॥ अ॒ग्नये॒स्वाहा॒सोमा॑य॒स्वाहा॑सवि॒त्रेस्वा
हा॒सर॑स्वत्यै॒स्वाहा॑पू॒ष्णेस्वाहा॒बृह॒स्पत॑ये॒स्वाहेन्द्रा॑य॒स्वाहा॒घोषा॑य
स्वाहा॒श्लोका॑य॒स्वाहा॒ऽꣳशा॑य॒स्वाहा॒भगा॑य॒स्वाहा॒र्य॒म्णेस्वाहा॑

॥ ५ ॥ पुवित्रेस्त्थः ॥ पुवित्रेस्त्थोवैष्ष्णव्यौसवितुर्व्वःप्प्रसवऽउत्पु
नाम्म्यच्छिद्द्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ अनिभृष्टमसिवाचो
वन्धुस्तपोजाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्द्यु
म्मिनीः ॥ सधमादोद्द्युम्मिनीरापऽएताऽअनाधृष्टाऽअपस्योवसा
नाः ॥ पस्त्यासुचक्रेवरुणःसधस्त्थमपांशिशुर्म्मातृतमास्वन्तः
॥ ७ ॥ क्षत्रस्योल्वम ॥ क्षत्रस्योल्वमसिक्षत्रस्यजराय्व्वसिक्षत्रस्ययो
निरसिक्षत्रस्यनाभिरसीन्द्रस्यवार्त्रघ्नमसिमित्रस्यासिवरुणस्यासि

त्वयायंवृत्रंवधेत् ॥ द्वासिरुजासिक्षुमासि ॥ पातैनम्प्राञ्चम्पातैनं
प्रत्यञ्चम्पातैनंन्तिर्य्यञ्चंन्दिग्भ्यःपात ॥ ८ ॥ आविर्म्मर्य्याऽ ॥
आविर्म्मर्य्याऽआवित्तोऽअग्निर्गृहपंतिरावित्तऽइन्द्रोवृद्धश्रवाऽ
आवित्तौमित्रावरुणौधृतव्रतावावित्तःपूषाविश्ववेदाऽआवित्तेद्या
वांपृथिवीविश्वशंम्भुवावावित्तादितिरुरुशंर्म्मा॥९॥[५]अवेष्टादन्द
शूकाः ॥ अवेष्टादन्दशूकाः प्राचीमारोहगायत्रीत्त्वावतुरथन्तरꣳ
सामंत्रिवृत्स्तोमौवसन्तऽऋतुर्ब्रह्मद्रविणन्दक्षिणामारोह ॥ १० ॥

दक्षिणामारोह । त्रिष्टुप्त्वांवतुबृहत्सामपञ्चदशस्तोमोग्रीष्मऽऋ
तुःक्षत्रन्द्रविणम्प्रतीचीमारोह॥११॥प्रतीचीमारोह।जगतीत्त्वाव
तुवैरूपꣳसामंसप्तदशस्तोमोवर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह
॥ १२ ॥ उदीचीमारोहानुष्टुप्त्वांवतुवैराजꣳसामैकविꣳशस्तोमः
शरदृतुःफलन्द्रविणमूर्द्ध्वामारोह॥१३॥ ऊर्द्ध्वामारोह। पङ्क्तिस्त्वांवतु
शाक्वररैवतेसामनीत्रिणवत्रयस्त्रिꣳशौस्तोमौहेमन्तशिशिरावृतूव
र्चोद्रविणम्प्रत्यंस्तन्नमुचेꣳशिरः ॥ १४ ॥ सोमस्यत्त्विषिः ॥ सोम

स्यात्त्विषिरसितवैवमेत्विषिम्भूयात् ॥ मृत्योःपाह्योजोसिसहोस्य
मृतमसि ॥१५॥ हिरण्यरूपाऽउषसोविरोकऽउभाविन्द्राऽउदिथः
सूर्य्यश्च ॥ आरोहतंवरुणमित्रगर्तन्ततश्चक्षाथामदितिन्दितिञ्चमि
त्रोसिवरुणोसि ॥ १६ ॥ [७] सोमस्यत्त्वाद्युम्न्नेनाभिषिञ्चाम्म्यग्ने
र्भ्राजसासूर्य्यस्यवर्च्चसेन्द्रस्येन्द्रियेण ॥ क्षत्राणाङ्क्षत्रपतिरेध्यतिदि
द्यून्पाहि ॥ १७॥ इमन्देवाः ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महते
क्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमम

मुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्म्माकम्ब्रा
ह्मणानाꣳराजा ॥ १८ ॥ प्रपर्वतस्य ॥ वृषभस्यपृष्ठान्नावश्चरन्तिस्व
सिचऽइयानाः ॥ ताऽआवृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीय
माणाः ॥ विष्णोर्विक्रमणमसिविष्णोर्विक्रान्तमसिविष्णोःक्रा
न्तमसि ॥ १९ ॥ प्रजापतेन । त्वदेतान्यन्योविश्वारूपाणिपरिताब
भूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्यपितासावस्यपिता
वयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ रुद्रयत्तेक्रिविपरन्नामतस्मिन्म

न्हुतमस्यमेष्ट्रमसिस्वाहा ॥ २० ॥ [४] इन्द्रस्यव्वज्ज्रं÷ ॥ इन्द्रस्यव्व
ज्ज्रोसिमित्रावरुणयोस्त्वाप्प्रशास्त्रो॑ऽप्प्रशिषायुनज्म्मि ॥ अव्ध्यंथा
यैत्त्वास्वधायैत्त्वारिष्टोऽअर्ज्जुनोमुरुताम्प्प्रसवेनजयापामुमनसास
मिन्द्रियेण ॥ २१ ॥ माते ॥ मातऽइन्द्रतेव्वयन्तुराषाडयुक्तासोऽअ
ब्रह्मताविदसाम ॥ तिष्ठारथमधियंव्वज्ज्रहस्तारश्मीन्देवयमसे
स्वश्वान् ॥२२॥ अग्नयेगृहपतये ॥ अग्नयेगृहपतयेस्वाहासोमायव्वन
स्प्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहा ॥ पृथिविमा

तस्मांमाहिꣳसीम्मौऽअहन्त्वाम् ॥२३॥ हꣳसः शुंचिषत् ॥ हꣳसः
शुंचिषद्वसुरन्तरिक्षसद्धोतांवेदिषदतिंथिर्दुरोणसत्॥नृषद्वंरसदृंतस
द्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २४ ॥ इयंद
सि ॥ इयंदस्यायुरस्यायुर्म्मयिंधेहियुङ्ङंसिवर्च्चौंसिवर्च्चोमयिंधेह्यूर्ग्ग
स्यूर्ज्जम्मयिंधेहि ॥ इन्द्रंस्यवांवीर्य्यकृतौबाहूऽअंभ्युपावंहरामि
॥ २५ ॥ [५] स्योनासिं। सुषदांसिक्षत्त्रस्ययोनिंरसि ॥ स्योनामासींद
सुषदामासींदक्षत्त्रस्ययोनिमासींद ॥ २६ ॥ निषंसाद ॥ धृतव्रंतोवरु

णःपुस्त्यास्वा ॥ साम्म्राज्ज्यायसुक्क्रतुं÷ ॥ २७॥ अभिभूरसि ॥ अ
भिभूरस्येतास्तेपञ्चदिशं÷कल्पन्ताम्ब्रह्मँस्त्वम्ब्रह्मासिसविताासि
सत्यप्प्रंसवोव्वरुणोसिसत्यौजाऽइन्द्रोसिव्विशौजारुद्द्रोसिसुशेवं÷ ॥
वहुकारश्श्रेयंस्करभूयंस्करेन्द्रंस्यवज्ज्रोसितेनंमेरध्य ॥ २८॥ अग्नि
ं‌पृथुः ॥ अग्निःपृथुर्द्धर्म्मणस्पातिर्ज्जुषाणोऽअग्निःपृथुर्द्धर्म्मणस्पाति
राज्यंस्यवेतुस्वाहास्वाहांकृताःसूर्य्यंस्यरश्मिभिर्यतद्ध्वँसजाता
नांम्मध्यमेष्ठ्यांय॥ २९॥ [४]सवित्राप्प्रंसवित्रा ॥ सरस्वत्यांव्वाचा

त्वष्ट्रा॑रू॒पैः पू॒ष्णाप॒शुभि॒रिन्द्रे॑णा॒स्मेबृह॒स्पति॑ना॒ब्रह्म॑णा॒वरु॑णे
नौजं॑सा॒ग्निना॒तेजं॑सा॒सोमे॑न॒राज्ञा॒विष्णु॑नाद॒शम्म्यादे॒वत॑या॒प्प्रसू॑त
ऽप्प्रस॑र्प्पामि ॥ ३० ॥ [१] अ॒श्विभ्या॑म्पच्यस्व ॥ अ॒श्विभ्या॑म्पच्य
स्व॒सर॑स्वत्यैपच्य॒स्वेन्द्रा॑यसु॒त्राम्म्णे॑पच्यस्व ॥ वा॒युः पू॒तः प॒वित्रे॑णप्प्र॒
त्यङ्क्सोमो॒ऽअति॑स्रुतः ॥ इन्द्र॑स्य॒युज्ज्य॒ऽसखा॑ ॥ ३१ ॥ कु॒विदु॒ङ्ग ।
यव॑मन्तो॒यवं॑चि॒द्यथा॒दान्त्य॑नुपू॒र्वंवि॒यूय॑ ॥ इ॒हेहै॑षाङ्कृणु॒हि॒भोज॑ना
नि॒येब॒र्हिषो॒नम॑ऽउक्तिँ॒य्यज॑न्ति ॥ उ॒प॒या॒मगृ॑हीतो॒स्य॒श्विभ्या॑

न्त्वासरस्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णे ॥ ३२ ॥ युवꣳसुरामम् ॥ युव
ꣳसुराममश्श्विनानमुचावासुरेसचा ॥ विपिपानाशुभस्पतीऽइन्द्र
ङ्कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमिवपितरौ ॥ पुत्रमिवपितरावश्श्विनोभे
न्द्रावथुङ्काव्यैर्द्दꣳसनाभिः ॥ यत्सुरामंव्यपिबःशचीभिःसरस्व
तीत्त्वामघवन्नभिष्णक् ॥ ३४ ॥ [ ४ ] ॥ ८ ॥ इतिश्रीवाजसनेयसंहि
तायांदशमोऽध्यायः ॥ १० ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥
युंजानएकादशप्रतूर्त्तꣳषोडशदेवस्यत्वादशापोदेवीद्द्वादशापोह्यि

कादशादितिद्वापंचाकूतिमष्टादशसप्तत्र्यशीतिः । हरिः ॐ युञ्जान
ः प्रथमम् ॥ युञ्जानः प्रथमम्मनस्तत्त्वायसविताधियं ॥ अग्ने
र्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरत्॥१॥युक्तेनमनसा।वयन्देव
स्यसवितुःसवे॥ स्वर्ग्यायशक्त्या॥ २॥ युक्त्वायसविता। देवान्त्स्व
र्यतोधियादिवम्॥ बृहज्ज्योतिः करिष्यतःसवितात्प्रसुवातितान्
॥ ३ ॥ युञ्जतेमनः ॥ युञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृह
तोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःप

रिंश्लुतिंऽ ॥ ४ ॥ युजेवांम् ॥ युजेवाम्ब्रह्मपूर्व्यन्नमोभिर्विश्लोकंऽ
एतुपथ्येवसूरेः ॥ शृण्वन्तुविश्वेऽअमृतस्यपुत्राऽआयेधामानिदि
व्यानितस्थुः ॥ ५ ॥ यस्यंप्प्रयाणंम् । यस्यंप्प्रयाणमन्न्वन्यऽइद्ययु
र्देवादेवस्यंमहिमानमोजंसा ॥ यः पार्थिवानिविममेसऽएतंशोरजां
ᳯंसिदेवः संवितामंहित्वना ॥ ६ ॥ देवंसवितंः ॥ देवंसवितःप्प्रसुव
यज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगंधर्वः केतपूः केतन्नंःपुनातुवा
चस्प्पतिर्वाचंन्नंःस्वदतु ॥ ७ ॥ इमन्नंः ॥ इमन्नोदेवसवितर्य्यज्ञम्प्र

र्णयदेवाव्यꣳसखिविदꣳसत्राजितन्धनजितꣳस्वर्जितम् ॥ ऋचा
स्तोमꣳसमर्द्धयगायत्रेणरथन्तरम्बृहद्गायत्रवर्त्तनिस्वाहा ॥ ८ ॥ देव
स्यत्त्वा । सवितुःप्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आद
देगायत्रेणच्छन्दसाङ्गिरस्वत्पृथिव्याःसधस्थादग्निम्पुरीष्यमङ्गि
रस्वदाभरत्त्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ९ ॥ अभ्रिरसि । नार्यसि
त्त्वयाव्वयमग्निꣳशकेमखनितुꣳसधस्थऽआ ॥ जागतेनच्छन्दसा
ङ्गिरस्वत् ॥ १० ॥ हस्तऽआधाय । सविताबिभ्रदभ्रिꣳहिरण्यय

यींम् ॥ अ॒ग्नेर्ज्योतिर्न्नि॒चाय्य॑पृथि॒व्याऽअध्याभ॑र॒दानु॑ष्टुभेन॒च्छन्द॑
साङ्गि॒रस्वत् ॥ ११ ॥ [११] प्रतूर्त्तवा॑जिन् ॥ प्रतूर्त्तवा॑जि॒न्नाद्र॑व॒वारि
ष्ठामनु॒सं॒वत॑म् ॥ दि॒वि॒ते॒जन्म॑पर॒ममन्तरि॑क्षे॒तव॒नाभि॑ःपृथि॒व्याम
धियोनि॒रित् ॥ १२ ॥ यु॒ञ्जाथा॒ᳪ॑रास॑भम् ॥ यु॒ञ्जाथा॒ᳪ॑रास॑भं॒युव
म॒स्मिन्न्यामे॑वृषण्वसू ॥ अ॒ग्निम्भर॑न्तमस्म॒युम् ॥ १३ ॥ योगे॑
योगेतव॒स्तर॑म् ॥ योगे॑योगेत॒वस्त॑रं॒वाजे॑वाजेहवामहे ॥ सखा॑य॒ऽइन्द्र॑
मू॒तये॑ ॥ १४ ॥ प्र॒तूर्व॒न्नेहि॑ ॥ प्र॒तूर्व॒न्नेह्य॑व॒क्राम॒न्नश॑स्तीरु॒द्रस्य॒गाण॑प

त्यम्मयोभूरेहि ॥ उर्वन्तरिक्षंवीहिस्वस्तिगव्यूतिरभयानिकृण्वन्पू
ष्णासयुजासह ॥ १५ ॥ पृथिव्याःसधस्त्थात् ॥ पृथिव्याःसधस्त्था
दग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्नि
म्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निः ॥ अन्वग्निरु
षसामग्रमख्यदन्वहानिप्रथमोजातवेदाः ॥ अनुसूर्यस्यपुरुत्रा
चरश्मीननुद्यावापृथिवीऽआततन्थ ॥ १७ ॥ आगत्त्यवाजी ॥ आ
गत्त्यवाज्यध्वानꣳसर्वामृधोविधूनुते ॥ अग्निꣳसधस्त्थेमहतिचक्षु

पानिचिंकीपते॥१८॥ आक्रम्म्यंवाजिन् ॥ आक्रम्म्यंवाजिन्पृथिवी
मग्निमिंच्छरुचात्त्वम् ॥ भूम्म्यांवृत्त्वायंनोब्रूहियतऽंखनैमतंवयम्
॥१९॥ द्यौस्ते। पृष्ठम्पृथिवीसधस्त्थमात्मान्तरींक्षꣳसमुद्रोयोनिः॥
विक्ख्यायचक्षुंपात्त्वमभितिंष्ठपृतन्न्यतः ॥ २० ॥ उत्त्कांम। महते
सौभंगायास्म्मादास्त्थानाद्द्रविणोदावांजिन् ॥ वयꣳस्यामसुमतौ
पृथिव्व्याऽअग्निङ्खनंन्तऽउपस्त्थेअस्याः ॥ २१ ॥ उदंक्रमीत् ॥ उदंक्र
मीद्द्रविणोदावाज्ज्यर्वाकऽंसुलोकꣳसुकृतम्पृथिव्व्याम् ॥ ततंःखने

मसुप्प्रतीकमग्निꣳस्वोरुहाणाऽअधिनाकमुत्तमम् ॥ २२ ॥ आत्त्वा
जिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिविश्वा ॥ पृथुन्तिर
श्चावयसाबृहन्तंव्यचिष्ठमन्नैरभसन्दृशानम् ॥ २३ ॥ आविश्वतः ।
प्प्रत्यञ्चञ्जिघर्म्म्यरक्षसामनसातज्जुषेत ॥ मर्य्यश्रीस्पृहयद्वर्णोऽ
अग्निर्न्नाभिमृशेतन्न्वाजम्भुराणऽ ॥ २४ ॥ परिवाजपतिऽ ॥ परिवा
जपतिऽकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ २५ ॥
परित्वा । ग्ग्नेपुरंवयंविप्प्रꣳसहस्यधीमहि ॥ धृषद्वर्णन्दिवेदिवेहन्ता

रम्भङ्गुरावताम् ॥ २६ ॥ त्वमग्ने । द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्य
स्त्वमश्मनस्परि ॥ त्वंवनेऽभ्यस्त्वमोषधीऽभ्यस्त्वन्नृणान्नृपतेजा
यसेशुचिः ॥ २७ ॥ [ १६ ] देवस्यत्त्वा । सवितुःप्रसवेश्विनोर्बाहु
ऽभ्याम्पूष्णोहस्ताऽभ्याम् ॥ पृथिव्याःसधस्त्थादग्निम्पुरीष्ष्यमङ्गि
रस्वत्त्वनामि ॥ ज्योतिष्मन्तन्त्वाग्नेसुप्रतीकमजस्रेणभानुना
दीद्यतम् ॥ शिवम्प्रजाऽभ्योहिंसन्तम्पृथिव्याःसधस्त्थादग्निम्पु
रीष्ष्यमङ्गिरस्वत्त्वनामः ॥ २८ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमसियो

निरग्नेःसंमृद्धमृभितऽपिन्वमानम् ॥ वर्द्धमानोमहाँ २ऽआचपुष्क
रेदिवोमात्रयावरिम्णाप्प्रथस्व ॥ २९ ॥ शर्म्मच ॥ शर्म्मचस्त्थोव
र्म्मचस्त्थोच्छिद्रेबहुलेऽउभे ॥ व्यचस्वतीसंवसाथाम्भृतमग्निम्पुरी
ष्यम् ॥ ३० ॥ संवसाथाम् ॥ संवसाथाᳪस्वर्विदासमीचीऽउरसा
त्मना ॥ अग्निमन्तर्भरिष्यन्तीज्योतिष्मन्तमजस्रमित् ३१
पुरीष्योसि । विश्वभराऽअथर्वात्वाप्प्रथमोनिरमन्थदग्ने ॥ त्वाम
ग्नेपुष्करादध्यथर्वानिरमन्थत ॥ मूर्ध्नोविश्वस्यवाघतः ॥ ३२ ॥

तमुत्त्वा । दुध्यङ्ङृषिंः पुत्रऽईधेऽअथर्व्वणः ॥ वृत्रहणम्पुरन्दरम् ॥ ३३
तमुत्त्वा । पाथ्योवृषासमींधेदस्युहन्तमम् ॥ धनञ्जयꣳरणेरणे
॥ ३४ ॥ सीदहोतः ॥ सीदहोतःस्वऽउलोकेचिकित्वान्त्सादयाय
ज्ञꣳसुकृतस्ययोनौ ॥ देवावीर्देवान्हविषायजास्यग्नेबृहद्यजमाने
वयोधाः ॥ ३५ ॥ निहोता । होतृषदनेविदानस्त्वेषोदीदिवाँ२ऽअस
दत्सुदक्षः ॥ अदब्धव्रतप्रमतिर्वसिष्ठःसहस्रम्भरःशुचिजिह्वोऽअ
ग्निः ॥ ३६ ॥ सꣳसीदस्वमहाँ२ असिशोचस्वदेववीतमः ॥ विधूमम

ग्नेऽअरुषम्मियेद्यसृजप्प्रशस्तदर्शतम्॥२७॥[१०] अपोदेवीः॥ अ
पोदेवीरुपसृजमधुमतीरयक्ष्मायप्प्रजाभ्यः॥ तासामास्थानादु
ज्जिहतामोषधयःसुपिप्पलाः॥२८॥ सन्ते। व्वायुर्म्मातरिश्वादधातू
त्तानायाहृदयंय्यद्विकस्तम्॥ योदेवानाञ्चरसिप्प्राणथेनकस्म्मैदेव
वषडस्तुतुब्भ्यम्॥ २९॥ सुजातोज्ज्योतिषा। सहशर्म्मव्वरूथमा
सदस्स्वः॥ व्वासोऽअग्नेविश्वरूपसंव्ययस्वविभावसो॥ ४०॥
उदुतिष्ठ। स्वध्वरावानोदेव्याधिया॥ दृशेचभासाबृहतासुशुक्वनि

राग्नेयाहिसुशास्तिभिः॥४१॥ऊर्द्ध्वऽऊषुणः॥ऊर्द्ध्वऽऊषुणऽऊतयेति
ष्ठांदेवोनसंविता॥ऊर्द्ध्वोवाजंस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयांमहे
॥ ४२॥ सजातः॥ सजातोगर्भोअसिरोदस्योरग्नेचारुर्विभृतऽओ
षधीषु ॥ चित्रःशिशुःपरितमांस्यक्तून्प्रमातृभ्योऽअधिकनिक्र
दद्गाः॥ ४३ ॥ स्थिरोभव । वीड्वङ्गऽआशुर्भववाज्यर्वन् ॥ पृथुर्भ
वसुषदस्त्वमग्नेःपुरीषवाहनः ॥ ४४ ॥ शिवोभव । प्रजाभ्योमा ॥ ८४ ॥
नुषीभ्यस्त्वमङ्गिरः ॥ माद्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्ष

म्मावनस्पतींन् ॥४५॥ प्रैतु ॥ वाजीकनिक्रदुन्नानंदुद्रासंभुःपत्वां ॥
भरंन्नग्निम्पुंरीष्यम्मापाद्यायुंषःपुरा ॥ वृषाग्निम्वृषंणम्भरंन्नपाङ्ग
र्भꣳसमुद्रियंम् ॥ अग्नऽआयांहिवीतयें ॥ ४६ ॥ ऋतꣳसत्त्यमृतꣳ
सत्त्यमग्निम्पुंरीष्यमङ्गिरस्वद्भंरामः ॥ ओषंधयःप्पतिंमोदद्ध्वमग्नि
मेतꣳशिवमायन्तमभ्यत्रंयुष्माः ॥ ष्यस्यन्विश्वाऽअनिराऽअ
मींवानिषीदंन्नोऽअपंदुर्म्मतिञ्जंहि ॥ ४७ ॥ ओषंधयःप्पातिं ॥ ओषं
धयःप्पतिंगृभ्णीतपुष्पंवतीःसुपिप्पलाः ॥ अयंम्वोगर्भऽऋत्त्वि

यं॑ऽप्प्रत्न॒ꣳ स॒धस्त्थ॒मासंदत्॒ ॥ ४८ ॥ विपाजसा ॥ पृथुनाशोशुचा
नाबाधंस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणोबृहतःशर्म्मणिस्या
मग्नेरहꣳसुहवस्यप्प्रणीतौ ॥ ४९ ॥ [ १२ ] आपोहि । ष्ठामयोभुव
स्तानऽऊर्जेदधातन ॥ महेरणायचक्षसे ॥ ५० ॥ योवः । शिवतमोर
सस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ ५१ ॥ तस्म्माऽअरम् ॥
तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ८५ ॥
॥ ५२ ॥ मित्रःसꣳसृज्ज्य ॥ पृथिवीम्भूमिञ्चज्ज्योतिषासह ॥ सुजात

ज्ञातवेदसमयक्ष्मायंत्त्वासहसृंजामिप्प्रजाब्भ्यंः ॥५३॥ रुद्राःसुह
सृज्यं। पृथिवीम्बृहज्ज्योतिंःसमींधिरे ॥ तेषांम्भानुरजंस्रऽइच्छुक्रो
देवेषुंरोचते ॥५४॥ सहसृंष्टांवसुंभिः ॥ सहसृंष्टांवसुभीरुद्रैर्द्धीरैःक
र्म्मणण्यामृंदंम् ॥ हस्ताब्भ्याम्मृद्वीङ्कृत्त्वासिनीवालीकृंणोतुताम्
॥ ५५ ॥ सिनीवालीसुकपर्द्दा । सुकुमारीरास्वौपशा ॥ सातुब्भ्यंम
दितेमह्योखान्दंधातुहस्तंयोः॥५६॥उषाङ्कृणोतु।शक्त्यांबाहुब्भ्या
मदितिर्द्धिया ॥ मातापुत्रंय्यथोपस्थेसाग्निम्बिभर्तुंगब्भेंऽआ ॥

मखस्यशिरोसि ॥ ५७ ॥ वसवस्त्वा । कृण्वन्तुगायत्रेणच्छन्दसा
ङ्गिरस्वद्ध्रुवासिपृथिव्यसिधारयामयिप्रजाꣳरायस्पोषङ्गौपत्त्यꣳ
सुवीर्य्यꣳसजातान्यजमानायरुद्रास्त्वाकृण्वन्तुत्रैष्टुभेनच्छन्द
साङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्रजाꣳरायस्पोषङ्गौप
त्त्यꣳसुवीर्य्यꣳसजातान्यजमानायादित्यास्त्वाकृण्वन्तुजागते
नच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्रजाꣳरायस्पोषं
ङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्यजमानायविश्वेत्त्वादेवावैश्वानराः

कृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधारयामयि
प्प्रजाꣳरायस्प्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्यजमानाय ॥ ५८
अदित्त्यैरास्ना ॥ अदित्त्यैरास्नास्यदितिष्टेबिलङ्गृभ्णातु । कृत्वाय
सामहीमुखामृन्मयीँय्योनिमग्नये ॥ पुत्रेभ्यःप्प्रायच्छददितिः
श्रपयानिति ॥ ५९ ॥ वसवस्त्वा । धूपयन्तुगायत्रेणच्छन्दसाङ्गिर
स्वद्रुद्रास्त्वाधूपयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्त्यास्त्वाधूपय
न्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्त्वादेवावैश्वानराधूपयन्त्त्वानुष्टु

भेनुच्छन्दसाङ्गिरस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतुविष्णु
स्त्वाधूपयतु ॥ ६० ॥ [ ११ ] अदितिष्ट्वा । देवीविश्वदेव्यावतीपृथि
व्याःसधस्थेऽअङ्गिरस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवीर्विश्वदे
व्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वद्दधतूखेधिषणास्त्वादेवीर्वि
श्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वदभीन्धतामुखेवरूत्री
ष्ट्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखेऽ
ग्नास्त्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वत्पचन्तू

खेजनंयुस्त्वाच्छिन्नपत्त्रादेवीर्विंश्वदेव्यावतीः पृथिव्याः सधस्थेऽ
अङ्गिरस्वत्खनन्तु खे ॥ ६१ ॥ मित्रस्यंचर्षणीधृतः ॥ मित्रस्यंचर्षणी
धृतोवोदेवस्यंसानसि ॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ६२ ॥ देवस्त्वा ।
सवितोद्वंपतुसुपाणिः स्वङ्गुरिः सुबाहुरुतशक्त्या ॥ अव्यंथमानापृ
थिव्यामाशादिशऽआपृण ॥ ६३ ॥ उत्थायबृहती । भवोदुतिष्ठध्रु
वात्वम् ॥ मित्रैतान्तऽउखाम्परिंददाम्म्यभिंत्त्याऽएषामाभेदि
॥ ६४ ॥ वसवस्त्वा । च्छृन्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वा

च्छृन्दन्तुत्रैष्टुंभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तुजागंते
नुच्छन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराऽआच्छृन्दन्त्वानुष्टुभेन
च्छन्दसाङ्गिरस्वत् ॥ ६५ ॥ [ ५ ] आकूंतिमग्निम् ॥ आकूंतिमग्नि
म्प्रयुजꣳस्वाहामनोमेधामग्निम्प्रयुजꣳस्वाहाचित्तंविज्ञातमग्नि
म्प्रयुजꣳस्वाहावाचोविधृंतिमतिमग्निम्प्रयुजꣳस्वाहाप्रजापंत
येमनंवेस्वाहाग्नयेवैश्वानरायस्वाहा ॥ ६६ ॥ विश्वोदेवस्यं । नेतुर्म्मर्तो
वुरीतसख्यम् ॥ विश्वोरायऽइषुध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा

॥ ६७॥ मासु । भित्त्थामासुरिपोम्वंधृष्ष्णुव्वीरयंस्वसु ॥ अग्निरश्श्रे
दङ्क्षंरिष्ष्यथं॥ ६८॥ दृढंहंस्वदेवि । पृथिविस्वुस्तयंऽआसुरीमाया
स्वधयांकृतासि॥ जुष्टंन्दुवेब्भ्यंऽइदमंस्तुहृव्यमरिंष्टात्वमुदिंहियुज्ञे
ऽअस्म्मिन्॥ ६९॥ द्व्रंन्नंसुर्प्पिरांसुतिंप्प्रृत्क्कोहोतावरैंण्यं॥ सहंस
स्प्पुत्रोऽअद्भुतं॥ ७०॥ शतम्॥ ५००॥ परंस्याऽअधिं। संवतोव
राँ२ऽअुब्भ्यातंर॥ यत्राहमास्मितौँ२ऽअंव॥ ७१॥ परमस्यांपराव
तं÷॥ परमस्यांपरावतोंरोहिदंश्श्वऽइहागंहि॥ पुरीष्ष्य÷पुरुप्प्रियो

ग्नेत्वन्तरामृधः ॥ ७२ ॥ यदग्ने । यदग्नेकानिकानिचिदातेदारू
णिदध्मसि ॥ सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥७३॥ यदत्ति॥
यदत्त्युपजिह्विकायद्वम्म्रोऽअतिसर्प्पति ॥ सर्व्वन्तदस्तुतेघृतन्तज्जुष
स्वयविष्ठ्य ॥ ७४ ॥ अहरहरप्प्रयावम् ॥ अहरहरप्प्रयावम्भरन्तो
श्वायेवतिष्ठतेघासमस्म्मै ॥ रायस्प्पोषेणसमिषामदन्तोग्नेमातेप्प्र
तिवेशारिषाम ॥ ७५ ॥ नाभापृथिव्याः । समिधानेऽअग्नौराय
स्प्पोषायबृहतेहवामहे ॥ इरम्मदम्बृहदुक्थंय्यजत्रञ्जेतारमग्निम्पृ

तंनासुसासहिम् ॥ ७६ ॥ याःसेनाः ॥ याःसेनाऽअभीत्त्वरीराव्या
धिनीरुगंणाऽउत ॥ येस्तेनायेचतस्करास्ताँस्तेऽअग्ग्नेपिंदधाम्म्यास्ये
॥ ७७ ॥ दᳪष्ट्राभ्याम्मलिम्म्लून् ॥ दᳪष्ट्राभ्याम्मलिम्म्लूञ्जम्भ्यै
स्तस्कराँ२उत ॥ हनुभ्याᳪस्तेनान्भगवस्ताँस्त्वङ्खादसुखादितान्
॥७८॥ येजनेषु । मलिम्म्लवस्तेनासस्तस्करावने ॥ येकक्षेष्वघाय
वस्ताँस्तेदधामिजम्भयोः ॥ ७९ ॥ योऽअस्म्मभ्यम् ॥ योऽअस्म्म
भ्यमरातीयाद्यश्चनोद्वेषतेजनः ॥ निन्दाद्योऽअस्म्मान्धिप्प्साच्च

सर्व्वन्तम्मंस्म्मसाकुरु॥ ८० ॥ सꣳशितम्मे ॥ सꣳशितम्मेब्रह्मसꣳ
शितंव्वीर्य्यम्बलम् ॥ सꣳशितङ्क्षत्रञ्जिष्णुयस्याहमस्म्मिपुरोहितः
॥ ८१ ॥ उदेषाम् ॥ उदेषाम्बाहूऽअतिरमुद्वर्च्चोऽअथोबलम् ॥ क्षिणो
मिब्रह्मणामित्रानुन्नयामिस्वाँ२ऽअहम् ॥ ८२ ॥ अन्नपतेन्नस्य । नो
देह्यनमीवस्यशुष्म्मिणः ॥ प्प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदे
चतुष्पदे॥८३॥[१८] इतिश्रीवाजसनेयसंहितायांएकादशोऽध्या
यः ॥ ११ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम ॥ ईशानःसप्तदश

दिवस्परिद्वादशसमिधाग्निंपंचदशापेतसप्तदशासुन्वंतंत्रयोदशया
ओषधीसप्तविꣳशतिर्मामाषोडशसप्तसप्तदशꣳशतम्॥हरिॐदृशा
नोरुक्मः॥ दृशानोरुक्मऽउर्व्याव्यंद्यौहुर्म्मर्षमायुः॑श्रियेरुचानः॥
अग्निरमृतोऽअभवद्वयोभिर्य्यदेनन्द्यौरजनयत्सुरेताः॥१॥नक्तो
षासासमनसा । विरूपेधापयेतेशिशुमेकꣳसमीची ॥ द्यावाक्षामा
रुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः॥२॥ विश्वा
रूपाणि ॥ विश्वारूपाणिप्रतिमुञ्चतेकविःप्रासावीद्भद्रंद्विपदेचतु

च्छपदे ॥ विनाकमक्ख्यत्सवितावरेण्योनुप्प्रयाणमुषसोविराजति
॥ ३ सुपर्णोसि ॥ गरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ ॥
स्तोमऽआत्माच्छन्दाᳫंस्यङ्गानियजूᳫंषिनाम ॥ सामतेतनूर्व्वाम
देव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याᳫंशफाः ॥ सुपर्णोसिगरुत्मान्दि
वङ्गच्छस्वःपत ॥ ४ ॥ विष्णोःक्रमः ॥ विष्णोःक्रमोसिसपत्न
हागायत्रञ्छन्दऽआरोहपृथिवीमनुविक्रमस्वविष्णोःक्रमोस्यभि ॥९१॥
मातिहात्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनुविक्रमस्वविष्णोःक्र

मोऽस्यरातीयतोहन्ताजागतञ्छन्दऽआरोहदिवमनुविक्रमस्ववि
ष्णोःक्रमोऽसिशत्रूयतोहन्तानुष्टुभञ्छन्दऽआरोहदिशोनुविक्रम
स्व॥ ५ ॥ अक्रन्ददग्निः ॥ अक्रन्ददग्निस्तनयन्निवद्यौःक्षामारेरिह
द्वीरुधःसमञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअख्यदारोदसीभा
नुनाभात्यन्तः ॥ ६ ॥ अग्नेऽभ्यावर्त्तिन् ॥ अग्नेऽभ्यावर्त्तिन्नभिमा
निवर्त्तस्वायुषावर्च्चसाप्प्रजयाधनेन ॥ सन्न्यामेधयारय्यापोषेण
॥ ७ ॥ अग्नेऽअङ्गिरः । शतन्तेसन्त्वावृतःसहस्रन्तऽउपावृतः ॥

अधापोपंस्यपोषेंणपुनंर्न्नोनष्टमाकृंधिपुनंर्नोरयिमाकृंधि ॥ ८ ॥ पुनं
रूर्ज्जा । न्निवर्त्तस्वपुनंरग्नऽइषायुंषा ॥ पुनंर्न्नःपाह्यᳬहंसः ॥ ९ ॥ स
हरुय्या । निवंर्त्तस्वाग्नेपिन्वंस्वधारंया ॥ विश्वप्प्स्न्यांविश्वतस्परिं
॥ १० ॥ आत्त्वां । हार्षमन्तरंभूर्द्ध्रुवस्तिष्ठाविंचाचलिः ॥ विशंस्त्वास
र्व्वांवाञ्छन्तुमात्वद्राष्ट्रमधिंभ्रशत् ॥ ११ ॥ उदुंत्तमम् ॥ उदुंत्तमम्वं
रुणपाशंमस्म्मदवांधमंव्विमंध्यमᳬश्रंथाय ॥ अथांवयमांदित्यव्व्रते
तवानांगसोऽअदिंतयेस्याम ॥ १२ ॥ अग्ग्रेबृहन् ॥ अग्ग्रेबृहन्नुषसांमू

द्यौऽअस्त्थान्निर्जगन्वान्तमसोज्ज्योतिषागात् ॥ अग्निर्भानुनारुश
तास्वङ्गऽआजातोविश्वासद्मान्यप्राः ॥१३॥ हꣳसꣳशुचिषत् ॥ हꣳ
सꣳशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृ
तसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ १४ ॥
सीदत्त्वम् ॥ सीदत्त्वम्मातुरस्याऽउपस्त्थेविश्वान्यग्नेवयुनानिवि
द्वान् ॥ मैनान्तपसामार्चिषाभिशोचीरन्तरस्याꣳशुक्रज्ज्योतिर्वि
भाहि ॥ १५ ॥ अन्तरग्ने । रुचात्त्वमुखायाऽसदनेस्वे ॥ तस्यास्त्वꣳ

हरंसातपञ्ज्ञातवेदꣳशिवोभव॥१६॥ शिवोभूत्त्वा। मह्यमग्ग्नेअथोसी
दशिवस्त्वम् ॥शिवाःकृत्त्वादिशꣳसर्व्वाꣳस्वंय्योनिमिहासदꣳ॥१७॥
[१७] दिवस्प्परि । प्प्रथमञ्जज्ञेऽअग्निरस्म्मद्द्वितीयम्परिजातवे
दाꣳ ॥ तृतीयमप्प्सुनृमणाऽअजस्त्रमिन्धानऽएनञ्जरतेस्वाधीꣳ
॥ १८ ॥ विद्मते । अग्ग्नेत्त्रेधात्त्रयाणिविद्मातेधामविभृतापुरुत्त्रा ॥
विद्मातेनामपरमङ्गुहायाद्विद्मातमुत्संय्यतऽआजगन्थ ॥१९॥ समु
द्रेत्त्वा । नृमणाऽअप्प्स्वन्तर्नृचक्षाईधेदिवोअग्ग्नऊधन् ॥ तृतीये

त्त्वारजंसितस्त्थिवाᳬसंमपामुपस्त्थेमहिषाऽअंवर्द्धन् ॥२०॥ अक्रं
न्ददुग्निः ॥ अक्रन्ददुग्निस्तुनयन्निवद्यौःक्षामारेरिहद्वीरुधः समुञ्ज
न् ॥ सुद्योजज्ञानोविहीमिद्धोऽअक्ख्यदारोदंसीभानुनांभात्यन्तः
॥२१॥ श्रीणामुदारः ॥ श्रीणामुंदारोधुरुणोरयीणाम्मनीषाणाम्प्रा
र्प्पणःसोमंगोपाः ॥ वसुः सूनुःसहसोऽअप्प्सुराजाविभात्यग्ग्रंऽउ
षसांमिधानः ॥२२॥ विश्वंस्यकेतुः ॥ विश्वंस्यकेतुर्भुवंनस्यगर्भंऽ
आरोदंसीऽअपृणाज्जायमानः ॥ वीडुञ्चिदद्रिंमभिनत्परायञ्जनाय

दुग्निमयंजन्तपञ्च॥२३॥उशिक्पावकः॥उशिक्पावकोऽअरतिःसु
मेधामर्तेष्वुग्निरमृतोनिधायि ॥ इयर्तिधूममरुषम्भरिभ्रदुच्छुक्रे
णशोचिषाद्यामिनक्षन् ॥ २४ ॥ दृशानोरुक्मः॥दृशानोरुक्मऽउ
र्व्याव्यद्यौद्दुर्म्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोऽअभवद्वयो
भिर्य्यदेनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्ते । अद्यकृणवद्भद्रशोचे
पूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्प्रतरंवस्योऽअच्छाभिसुम्नन्देवभ ॥ ९४ ।
क्तंय्यविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भजसौश्रवसेष्वग्नऽउक्थऽउ

क्थ्ऽआभंजशुस्यमाने ॥ प्प्रियश्सूर्य्यैप्प्रियोअग्नाभंवात्त्युज्जातेनं
भिनदुदुज्जनित्त्वैः ॥ २७ ॥ त्त्वामंग्ने ॥ त्त्वामंग्नेयजमानाऽअनु
द्यून्विश्श्वावसुदधिरेवार्य्याणि ॥ त्त्वयासहद्रविणमिच्छमानाव्व्रज
ङ्गोमन्तमुशिजोविववव्रुः ॥२८॥अस्ताव्यग्निः॥अस्ताव्यग्निन्नराꣳ
सुशेवोवैश्श्वानरऽऋषिभिःसोमगोपाः ॥ अद्वेषेद्यावापृथिवीहुवेम
देवाधत्तरयिमस्म्मेसुवीरम् ॥ २९ ॥[१२] समिधाग्निम् ॥ समिधा
ग्निन्दुवस्यतघृतैर्बोधयतातिथिम्॥आस्मिन्हव्याजुहोतन॥३०॥

उदुत्त्वा ॥ उदुत्त्वाविश्श्वेदेवाऽअग्ग्नेभरन्तुचित्तिभिः ॥ सनोभवशि
वस्त्वꣳसुप्प्रतीकोविभावसुः ॥ ३१ ॥ प्रेत ॥ प्रेदग्ग्नेज्ज्योतिष्ष्मान्याह्या
हिशिवेभिरर्चिभिष्ट्वम् ॥ बृहद्भिर्भानुभिर्भासन्माहिꣳसीस्तन्वा
प्प्रजाः ॥ ३२ ॥ अक्क्रन्ददग्ग्निः ॥ अक्क्रन्ददग्ग्निस्तनयन्निवद्यौः क्षा
मारेरिहद्वीरुधः समञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअक्ख्यदारो
दसीभानुनाभात्त्यन्तः ॥ ३३ ॥ प्प्रप्प्रायम् ॥ प्प्रप्प्रायमग्ग्निर्भरतस्य
शृण्वेवियत्सूर्य्योनरोचतेबृहद्भाः ॥ अभियꣳपूरुम्पृतनासुतस्त्थौदी

दायदैव्योऽअतिथिःशिवोनः ॥ ३४ ॥ आपोदेवीः ॥ आपोदेवीःप्र
तिगृभ्णीतभस्मैतत्स्योनेकृणुध्वःसुरभाऽउलोके ॥ तस्मैनमन्ता
ञ्जनयःसुपत्नीम्मातेवपुत्रम्बिभृताप्स्वेनत् ॥ ३५ ॥ अप्स्वग्ने ॥
अप्स्वग्नेसधिष्टवसौषधीरनुरुध्यसे ॥ गब्भेंसञ्जायसेपुनः ॥ ३६ ॥
गब्भोऽअसि ॥ गब्भोअस्योषधीनाङ्गब्भोवनस्पतीनाम् ॥ गब्भो
विश्वस्यभूतस्याग्नेगब्भोऽअपामसि ॥३७॥ प्रसद्यभस्मना ॥ प्र
सद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ संसृज्यमातृभिष्ट्वञ्ज्यो

तिंष्म्मात्त्पुनरासंदः॥३८॥ पुनेरासद्यं । पुनरासद्यसदंनमुपश्च्चंपृथि
वीमंग्ने ॥ शेषैमातुर्य्यथोपस्त्थेनन्तरस्याᳩंशिवतंमः ॥ ३९ ॥ पुनं
रूर्ज्जा । निवंर्त्तस्वपुनरग्नऽइषायुंषा ॥ पुनंर्न्नःपाह्यःहंसः ॥ ४० ॥
सहरय्या । निवंर्त्तस्वाग्नेपिन्न्वंस्वधारंया ॥ विश्वप्प्स्न्यांविश्श्वतुस्प्प
रिं ॥ ४१ ॥ वोधांमे । ऽअस्यबर्चसोयाविष्टमःहिष्टस्यप्प्रभृतस्यस्वधा
वः ॥ पीयंतित्त्वोऽअनुंत्त्वोगृणातिबन्दारुष्टेतन्न्वंवन्देऽअग्ने ॥४२॥
सवोधि । सूरिर्म्मघवावसुंपतेवसुदावन् ॥ युयोद्ध्यस्म्मद्द्वेषांᳩंसिवि

श्श्वकर्म्मणेस्वाहा ॥ ४३ ॥ पुनस्त्वा । दित्त्यारुद्द्रा व्वसवः समिन्धता
म्पुनर्ब्ब्रह्माणो व्वसुनीथयज्ञैः ॥ घृतेन त्वन्तन्वं व्वर्द्धयस्वसत्त्याःसन्तुय
जमानस्यकामाः ॥४४॥ [१५] अपेत ॥ अपेतव्वीतव्विचसर्प्पतातोये
त्रस्त्थपुराणायेचनूतनाः ॥ अदाद्यमोवसानम्पृथिव्याऽअक्रन्निम
म्पितरोलोकमस्म्मै ॥ ४५ ॥ सँज्ञानमसि । कामधरणम्मयितेकाम
धरणम्भूयात् ॥ अग्ग्नेर्भस्म्मास्यग्ग्नेःपुरीषमसिचितस्त्थपरिचित
ऽऊर्द्ध्वचितः श्रयद्ध्वम् ॥ ४६ ॥ अयꣳसः ॥ अयꣳसोऽअग्ग्निर्य

स्मिन्त्सोममिन्द्रः सुतन्दधेजठरेवावशानः ॥ सहस्रियम्वाजम
त्यन्नसप्तिᳬ ससवान्त्सन्स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत् ॥ अ
ग्नेयत्तेदिविवर्च्चः पृथिव्यांयदोषधीष्वप्स्वायजत्र ॥ येनान्तरि
क्षमुर्व्वाततन्थत्वेषः सभानुरर्ण्णवोनृचक्षाः ॥ ४८ ॥ अग्नेदिवः ॥ अ
ग्नेदिवोऽअर्ण्णमच्छाजिगास्यच्छादेवाँ२ऽऊचिषेधिष्ण्याये ॥ यारो
चनेपरस्तात्सूर्य्यस्ययाश्चावस्तादुपतिष्ठन्तऽआपः ॥ ४९ ॥ पुरी
ष्यासोऽअग्नयः । प्रावणेभिः सजोषसः ॥ जुषन्तांयज्ञमद्रुहो

नमीवाऽइषोमही३ ॥ ५० ॥ इडामग्ने । पुरुद३ंस३ंसनिङ्गोःशश्वत्त
म३ंहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमति
र्भूत्त्वस्मे ॥ ५१ ॥ अयन्ते ॥ अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽअ
रोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५२ ॥ चिदसि ॥
चिदसितयादेवतयाङ्गिरस्वद्ध्रुवासीदपरिचिदसितयादेवतयाङ्गिर
स्वद्ध्रुवासीद ॥ ५३ ॥ लोकम्पृण । च्छिद्रम्पृणाथोसीदध्रुवात्त्वम् ॥
इन्द्राग्नीत्त्वाबृहस्पतिरस्मिन्न्योनावसीषदन् ॥ ५४ ॥ ताऽअस्य ।

सूदंदोहसꣳसोमꣳश्रीणन्तिपृश्नयः ॥ जन्मन्देवानांविशस्त्रिष्ष्वा
रोचनेदिवः ॥ ५५ ॥ इन्द्रंविश्वाः ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्र
व्यचसङ्गिरः ॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ ५६ ॥
समितम् ॥ समितꣳसङ्कल्पेथाꣳसम्प्रियौरोचिष्णूसुमनस्यमानौ ॥
इषमूर्ज्जमभिसंवसानौ ॥ ५७ ॥ संवाम् ॥ संवाम्मनाꣳसिसंव्व्रतास
मुचित्तान्याकरम् ॥ अग्नेपुरीष्याधिपाभवत्त्वन्नऽइषमूर्जंय्यज



मानायधेहि ॥ ५८ ॥ अग्नेत्त्वम् ॥ अग्नेत्त्वम्पुरीष्योरयिमान्पुष्टि

माँऽऽअंसि ॥ शिवाꣳकृत्त्वादिशः सर्व्वाः स्वंय्योनिमिहासदः ॥५९॥
भवंतन्नः ॥ भवंतन्नः समनसौसचेतसावरेपसौ ॥ मायज्ञꣳ हिꣳसिष्ट
म्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ६० ॥ मातेवपुत्रम् ॥
मातेवपुत्रम्पृथिवीपुरीष्ष्यमग्निꣳस्वेयोनावभारुषा ॥ तांविश्वैर्देवै
र्ऋतुभिः संविदानः प्प्रजापतिर्व्विश्वकर्म्मा विमुञ्चतु ॥६१॥[७]असु
न्वन्तमयजमानम् ॥ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विं
हितस्कंरस्य ॥ अन्न्यमस्म्मदिच्छसातऽइत्त्यानमोदेविनिर्ऋते तु

ऽभ्यमस्तु॥६२॥ नमःसुतेनिर्ऋतेतिग्मतेजोयस्मयंविचृताबन्धमे
तम् ॥ यमेनत्त्वंय्यम्म्यासंविदानोत्तमेनाकेऽअधिरोहयैनम् ॥६३॥
यस्यास्ते। घोरऽआसञ्जुहोम्म्येषाम्बन्धानामवसर्ज्जनाय ॥ यान्त्वा
जनोभूमिरितिप्प्रमन्दन्तेनिर्ऋतिन्त्वाहम्परिवेदविश्श्वतः ॥ ६४ ॥
यन्तेदेवीनिर्ऋतिराबबन्धपाशङ्ग्रीवास्वविचृत्त्यम् ॥ तन्तेव्विष्ष्या
म्म्यायुषोनमद्ध्यादथैतम्पितुमद्धिप्प्रसूतः ॥ नमोभूत्त्यैयेदञ्चकार
॥ ६५ ॥ निवेशनःसङ्गमनः ॥ निवेशनःसङ्गमनोव्वसूनांविश्श्वारूपा

भिचेष्टेशचीभिः ॥ देवऽईवसवितासत्त्यधर्म्मेन्द्रोनतस्त्थौसमरेप
थीनाम् ॥ ६६ ॥ सीरायुञ्जन्ति । कवयोयुगाव्वितन्वतेपृथक् ॥ धीरा
देवेषुसुम्न्नया ॥ ६७ ॥ युनक्तसीरा ॥ युनक्तसीराव्वियुगातनुद्ध्वङ्कृते
योनौव्वपतेहबीजम् ॥ गिराचश्श्रुष्टिश्सभराऽअसन्नोनेदीयऽइत्त्सृ
ण्य÷पक्कमेयात् ॥ ६८ ॥ शुनꣳसु । फालाविकृषन्तुभूमिꣳशुनङ्की
नाशाऽअभियन्तुवाहैः ॥ शुनासीराहविषातोशमानासुपिप्पलाऽ
ओषधीःकर्त्तनास्म्मे ॥ ६९ ॥ घृतेनसीता ॥ घृतेनसीतामधुनासम

विना ॥ साकंवातस्यध्राज्यासाकन्नश्यनिहाकया ॥ ८७ ॥ अन्न्या
वः ॥ अन्न्यावोऽअन्न्यामवत्त्वन्न्यान्न्यस्याऽउपावत ॥ ताःसर्वाःसंवि
दानाऽइदम्मेप्रावतावचः ॥ ८८ ॥ याःफलिनीः ॥ याःफलिनी
र्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो
मुञ्चन्त्वꣳहसः ॥ ८९ ॥ मुञ्चन्तुमा । शपत्थ्यादथोवरुण्यादुत ॥ अ
थोयमस्यपड्वीशात्सर्वस्म्माद्देवकिल्बिषात् ॥ ९० ॥ अवपतन्तीरव
दन् ॥ अवपतन्तीरवदन्दिवऽओषधयस्परि ॥ यञ्जीवमश्नवामहै

नसरिष्ष्यातिपूरुषः ॥ ९१ ॥ याऽओषधीः ॥ याऽओषधीःसोमरा
ज्ञीर्बह्वीःशतविचक्षणाः ॥ तासामसित्त्वमुत्तमारङ्कामायशꣳहृदे
॥ ९२ ॥ याऽओषधीः ॥ याऽओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीम
नु ॥ बृहस्पतिप्प्रसूताऽअस्यैसन्दत्तवीर्य्यम् ॥ ९३ ॥ याश्चे ॥ याश्चे
दमुपशृण्वन्तियाश्चदूरम्परागताः ॥ सर्वाःसङ्गत्त्यवीरुधोस्यैसन्दत्त
वीर्य्यम् ॥ ९४ ॥ मावः ॥ मावोरिषत्त्खनितायस्मैचाहङ्खनामि
वः ॥ द्विपाच्चतुष्पादस्माकꣳसर्वमस्त्वनातुरम् ॥ ९५ ॥ ओषधयः

सम् ॥ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ९६ ॥ नाशयित्री बलासस्यार्शस उपचितामसि ॥ अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ॥ ९७ ॥ त्वाङ्गन्धर्वाः ॥ त्वाङ्गन्धर्वा अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९८ ॥ सहस्व मे ॥ सहस्व मे अरातीः सहस्व पृतनायतः ॥ सहस्व सर्वम्पाप्मानꣳ सहमानास्योषधे ॥ ९९ ॥ दीर्घायुस्ते ॥ दीर्घायुस्त ओषधे खनिता यस्मै च त्वा ख

नोम्म्यहम् ॥ अथोत्त्वन्दीर्ग्घायुर्ब्भूत्त्वाशतवल्शाविरोहतात्
॥ १०० ॥ त्वमुत्तमा । स्योषधेतववृक्षाऽउपस्तयः ॥ उपस्तिरस्तुसो
स्म्माकंय्योऽअस्म्माँ२ऽअभिदासति ॥ १०१ ॥ [२७] मामाहिꣳ
सीज्जनितायःपृथिव्यायोवादिवꣳसत्यधर्म्माव्यानट् ॥ यश्चापश्च
न्द्राःप्प्रथमोजजानकस्म्मैदेवायहविषाविधेम ॥ १०२ ॥ अब्भ्या
वर्त्तस्व । पृथिवियज्ञेनपयसासह ॥ वपान्तेऽअग्निरिषितोऽअरो
हत् ॥ १०३ ॥ अग्नेयत् ॥ अग्नेयत्तेशुक्रंय्यच्चन्द्रंय्यत्पूतंय्यच्चय

ज्ञियम् ॥ तद्देवेभ्योभरामसि ॥ १०४ ॥ इषमूर्ज्जम् ॥ इषमूर्ज्जमह
मितऽआदमृतस्ययोनिम्माहिषस्यधाराम् ॥ आमागोषुविशत्वातनू
पुजहामिसेदिमानिराममीवाम् ॥ १०५ ॥ अग्नेतव ॥ अग्नेतवश्र
वोवयोमहिभ्राजन्तेऽअर्च्चयोविभावसो ॥ बृहद्भानोशवसावाज
मुक्थ्यन्दधासिदाशुषेकवे ॥ १०६ ॥ पावकवर्च्चाःशुक्रवर्च्चाः ॥ पाव
कवर्च्चाःशुक्रवर्च्चाऽअनूनवर्च्चाऽउदियर्षिभानुना ॥ पुत्रोमातरावि
चरन्नुपावसिपृणाक्षिरोदसीऽउभे ॥ १०७ ॥ ऊर्ज्जोनपात् ॥ ऊर्ज्जोन

पाज्जातवेदः सुशस्तिभिर्म्मन्दस्वधीतिभिर्हितः ॥ त्वेऽइषः सन्दधु
र्भूरिवर्प्पसश्चित्रोतयोवामजाताः ॥ १०८ ॥ इरज्ज्यन्नग्ने । प्प्रथय
स्वजन्तुभिरस्म्मेरायोऽअमर्त्त्य ॥ सदर्शतस्यवपुषोविराजसिपृण
क्षिसानसिङ्क्रतुम् ॥ १०९ ॥ इष्क्कर्त्तारमध्वरस्य ॥ इष्कर्त्तारमध्वरस्य
प्प्रचेतसङ्क्षयन्तᳪराधसोमहः ॥ रातिंवामस्यसुभगाम्महीमिषन्द
धासिसानसिᳪरयिम् ॥ ११० ॥ ऋतावानम्महिषं । विश्वदर्शतम
ग्निᳪसुम्म्नायदधिरेपुरोजनाः ॥ श्रुत्कर्णᳪसप्प्रथस्तमन्त्वागिरादै

द्व्युम्मानुंषायुगा ॥ १११ ॥ आप्प्यांयस्व । समेंतुतेव्विश्श्वतं÷सोमव्वृ
ष्ण्यंम् ॥ भवाव्वाजंस्यसङ्गथे ॥ ११२ ॥ सन्तें ॥ सन्तेपयांᳲसिसमु
यन्तुव्वाजा᳚संव्वृष्ण्यांन्न्यभिमातिषाहं÷ ॥ आप्प्यायंमानोऽअमृ
तांयसोमदिविश्श्रवांᳲस्युत्तमानिंधिष्ष्व ॥ ११३ ॥ आप्प्यांयस्व ॥
मदिन्तमसोमव्विश्श्वेंभिरᳲशुभिं÷ ॥ भवांन᳚सप्प्रथंस्तम᳚सखांव्वृधे
॥ ११४ ॥ आतें । व्वत्सोमनोंयमत्परमाच्चित्सधस्त्थात् ॥ अग्ग्नेत्त्वां
ङ्कांमयागिरा ॥ ११५ ॥ तुब्भ्यन्ताः ॥ तुब्भ्यन्ताऽअंङ्गिरस्तमव्वि

श्वांॅंसुक्षितयॅंपृथॅक्॥ अग्नेकामायेमिरे ॥ ११६ ॥ अग्निॅंप्प्रिये
षुं॥अग्निॅंप्प्रियेषुधामंसुकामोभूतस्यभव्यस्य सम्म्राडेकोविराजति
॥ ११७ ॥ [१६] इतिश्रीवाजसनेयसंहितायांद्वादशोऽध्यायः
॥ १२॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ मयिगृह्णामिपंचद
शध्रुवासिमधुवाताएकादशकौसम्यक्स्रवंतिनवेमंमाषडपांत्वैका
ऽयंपुरःपंचसप्ताष्टापंचाशत्॥ मयिगृह्णामि ॥ मयिगृह्णाम्म्यग्नेऽअ
ग्निॅंरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय ॥ मामुंदेवताऽसच

न्ताम्॥ १॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमसियोनिरग्नेश्समुद्रमभि
तःपिन्वमानम् ॥ वर्द्धमानोमहाँ२ऽआचपुष्करेदिवोमात्रयावरि
म्णाप्प्रथस्व॥ २॥ ब्रह्मयज्ञानम् ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ता
द्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसत
श्चयोनिमसतश्चविवः॥ ३॥ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजा
तःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायह
विषाविधेम॥ ४॥ द्रप्सश्चस्कन्द। पृथिवीमनुद्यामिमञ्चयोनिमनु

यश्चपूर्व्वं÷ ॥ समानंस्योनिमनुंसञ्चरन्तन्द्रप्प्सञ्जुहोम्म्यनुंसप्तहो
त्राऽ ॥५॥ नमोस्तु । सर्प्पेभ्योयेकेचपृथिवीमनुं ॥ येऽअन्तरिक्षे
येदिवितेभ्यं÷सर्प्पेभ्योनमं÷ ॥ ६ ॥ याऽइषवं ॥ याऽइषवोयातु
धानानांय्येवावनस्पती १ रनुं ॥ येवांवटेषुशेरतेतेभ्यं÷सर्प्पे
भ्योनमं÷ ॥ ७ ॥ येवा । मीरोचनेदिवोयेवासूर्य्यस्यरश्मिषु ॥ ये
षामप्प्सुसदंस्कृतन्तेभ्यं÷सर्प्पेभ्योनमं÷ ॥८॥ कृणुष्ष्वपाजं÷ ॥
कृणुष्ष्वपाजंप्प्रसितिन्नपृत्थ्वींय्याहिराजेवामंवाँ २ ऽइभेन ॥ तृ

ऽव्वीमनुष्प्रासितिन्द्रूणानोस्तासिविद्ध्वरक्षसुस्तपिष्ठैः॥९॥ तवभ्रमा
सः॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः॥ तपूं
ष्यग्ग्नेजुह्वापतङ्गानसन्दितोविसृजविष्वगुल्काः ॥ १० ॥ प्रति
स्पशः ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअ
दब्धः ॥ योनोदूरेऽअघशंसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षी
त् ॥ ११ ॥ उदग्ने। तिष्ठप्रत्यातनुष्वन्यमित्राँ२ ऽओषतात्तिग्ग्म
हेते ॥ योनोऽअरातिंसमिधानचक्रेनीचातन्धक्ष्यतसन्नशुष्कम्

॥१२॥ऊर्द्ध्वोभंव॥ ऊर्द्ध्वोभवप्रतिविद्ध्याद्ध्यस्म्मदाविष्कृणुष्वदैव्यां

न्यग्ने॥ अवस्थिरातनुहियातुजूनांज्जामिमजामिम्प्रमृणीहिशत्रू

न्॥ अग्नेष्ट्वातेजंसासादयामि॥ १३॥ अग्निर्म्मूर्द्धा। दिवःकुकुत्प

त्तिः पृथिव्याअयम्॥ अपाᳪरेताᳪसिजिन्वति॥ इन्द्रंस्यत्त्वौज

सासादयामि॥ १४॥ भुवोयज्ञस्य॥ भुवोयज्ञस्यरजसश्चनेतायत्रा

नियुद्भिःसचसेशिवाभिः॥ दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्ने

चकृषेहव्यवाहम्॥ १५॥[१५] ध्रुवासि। धरुणास्तृताविश्वकर्म्म

णा ॥ मात्त्वांसमुद्रऽउद्वधीन्मासुपर्ण्णोव्व्यंथमानापृथिवीन्दृंᳮह
॥ १६ ॥ प्रजापतिष्ट्वा सादयत्त्वपाम्पृष्ठेसमुद्रस्येमन् ॥ व्व्यचस्वतीम्प्र
थस्वतीम्प्रथस्वपृथिव्व्यसि ॥ १७ ॥ भूरंसि ॥ भूरंसिभूमिरस्यदितिरसि
व्विश्वधायाव्विश्वस्यभुवनस्यधर्त्री ॥ पृथिवीय्यच्छपृथिवीन्दृंᳮहपृ
थिवीम्माहिᳮसीः ॥ १८ ॥ व्विश्वस्म्मैप्प्राणाय ॥ व्विश्वस्म्मैप्प्राणाया
पानायव्व्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ अग्निष्ट्वाभिपातुमह्या
स्वस्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १९ ॥ का

ण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसह
स्रेणशतेनच ॥२०॥ याशतेन । प्रतनोषिसहस्रेणविरोहसि । तस्यां
स्तेदेवीष्टकेविधेमहविषाव्वयम् ॥२१॥ यास्ते । ऽअग्नेसूर्य्येरुचोदि
वमातन्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्यसर्वाभीरुचेजनायनस्कृ
धि॥२२॥ यावः॥यावोदेवाःसूर्य्येरुचोगोष्वश्वेषुयारुचः॥इन्द्रा
ग्नीताभिःसर्वाभीरुचन्नोधत्तबृहस्पते ॥२३॥ विराड्ज्योतिः ॥
विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वासादयतुपृ

ष्ठेपृथिव्याज्ज्योतिष्मतीम् ॥ विश्वंस्म्मैप्प्राणायापानायंव्यानाय
विश्वञ्ज्योतिर्य्यच्छ ॥ अग्निष्ट्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासीद
॥२४॥ मधुश्च॥मधुश्चमाधवश्चवासन्तिकावृतूऽअग्नेरन्तःश्लेषोसि
कल्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयःकल्प्पन्तामग्नय
यःपृथङ्ममज्यैष्ठ्यायसव्व्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृ
थिवीऽइमे ॥ वासन्तिकावृतूऽअभिकल्प्पमानाऽइन्द्रमिवदेवाऽअ
भिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥२५॥ अषाढासि॥ अ

पांढासिसहंमानासहस्वरातीश्सहंस्वपृतनायतः ॥ सहस्रंवीर्य्यमसि
सामांजिन्व ॥२६॥ [११] मधुवाताः ॥ मधुवाताऽऋतायतेमधुंक्षर
न्तिसिन्धंवः ॥माध्वीर्न्नःसन्त्वोषंधीः ॥२७॥मधुनक्तम् ॥मधुनक्तमु
तोषसोमधुमत्पार्थिवुःरजंः ॥मधुद्यौरंस्तुनःपिता ॥२८॥ मधुंमा
न्नः ॥ मधुंमान्नोवनस्पतिर्म्मधुंमाँ २ अस्तुसूर्य्यंः ॥ माध्वीर्गावो
भवन्तुनः ॥ २९ ॥ अपाङ्गम्भंन् ॥ अपाङ्गम्भंन्त्सीदमात्वासूर्य्यो
भितांप्प्सीन्माग्निर्वैश्वानरः ॥ अच्छिन्नपत्राःप्रजाऽअंनुवीक्षस्वा

नुंत्त्वादिव्याववृष्टिं÷सचताम् ॥ ३० ॥ त्रीन्त्संमुद्रान् ॥ त्रीन्त्संमुद्रा
न्त्समंसृपत्स्वर्ग्गानुपाम्पतिर्वृषभऽइष्टंकानाम् ॥ पुरीषंवसानंःसुकृ
तस्यलोकेतत्रंगच्छयत्रपूर्वेपरेताः ॥ ३१ ॥ महीद्यौःपृथिवीचंनऽइ
मंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ३२ ॥ विष्ष्णोःक
र्म्माणि । पश्यतयतोव्रतानिंपस्पशे ॥ इन्द्रंस्ययुज्ज्यःसखा ॥ ३३॥
ध्रुवासि ॥ धरुणेतोजंज्ञेप्रथममेभ्योयोनिंभ्योऽअधिजातवेदाः ॥
सगायत्र्यात्रिष्टुभानुष्टुभाचदेवेभ्योहव्यंवंहतुप्प्रजानन् ॥ ३४ ॥

इषेरा॒ये। रंम॑स्व॒सहं॑सेद्यु॒म्न॑ऽऊ॒र्जेऽअप॑त्त्याय॥ स॒म्म्राडं॑सि॒स्व॒राडं॑सि
सा॑रस्व॒तौत्वोत्सौ॒प्प्राव॑ताम् ॥ ३५ ॥ अग्ग्ने॑यु॒क्ष्व ॥ अग्ग्ने॑यु॒क्ष्वाहि
ये॑तवा॒श्श्वा॑सो॒देव॑सा॒धव॑÷॥ अरं॒वहं॑न्तिम॒न्न्यवे॑ ॥३६॥यु॒क्ष्वाहि ॥ दे॒वं॒
हू॒तेमाँ॑ २ऽअश्वाँ॑ २ ऽअग्ग्ने॑र॒थीरि॑व॥निहोतां॑पू॒र्व्यश्श॑सद॒॥३७॥[११]
स॒म्म्यक्स्र॑वन्ति। स॒रितो॒नधेनां॑ऽअ॒न्तर्हृ॒दामन॑सापू॒यमा॑नाः ॥ घृ॒त
स्य॒धारा॑अ॒भिचा॑कशीमिहि॒र॒ण्ण्ययो॑वे॒त॒सोमद्ध्ये॑ऽअ॒ग्ग्नेः ॥३८॥ ऋ॒चे
त्वा॑। रु॒चेत्त्वा॑भा॒सेत्वा॒ज्ज्योति॑षेत्वा ॥ अभू॑दि॒दंवि॒श्श्वंस्य॒भुवं॑नस्य

वाजिनमग्ग्नेर्वैश्वानरस्यंच ॥३९॥अग्निर्ज्ज्योतिषा॥अग्ग्निर्ज्ज्योतिषा
ज्ज्योतिष्म्मान्त्रुक्क्मोवर्च्चसावर्च्चस्वान्॥ सहस्त्रदाऽअसिसहस्त्रायत्त्वा
॥४०॥ आदित्यङ्गर्भम् ॥ आदित्यङ्गर्भम्पयसासमङ्ग्धिसहस्रस्यप्प्र
तिमांविश्वरूपम् ॥ परिवृङ्ग्धिहरसामाभिमंᳪस्त्थाःशतायुषङ्कृणुहि
चीयमानः ॥४१॥ वातस्यजूतिं । वरुणस्यनाभिमश्वञ्जज्ञानᳪसरि
रस्यमध्ध्ये ॥शिशुन्नदीनाᳪहरिमद्रिबुध्ध्नमग्ग्नेमाहिᳪसीःपरमेव्यो
मन्॥ ४२॥ अंजस्त्रमिन्दुम् ॥ अजस्त्रमिन्दुमरुषम्भुरण्युमग्ग्निमी

डेपूर्व्वचित्तिन्नमोभिः ॥ सपर्व्वभिर्ऋतुशःकल्प्पमानोगाम्माहिᳬसीः
रदितिंविराजम् ॥ ४३ ॥ वरूत्रीन्त्वष्टुः ॥ वरूत्रीन्त्वष्टुर्व्वरुणस्यना
भिमविञ्ज्ञानाᳬरजसःपरस्मात् ॥ महीᳬसाहस्रीमसुरस्यमा
याम्मग्नेमाहिᳬसीःपरमेव्योमन् ॥ ४४ ॥ योऽअग्निः ॥ योऽअग्नि
रग्नेरध्यजायतशोकात्पृथिव्याऽउतवादिवस्प्परि ॥ येनप्प्रजाविश्व
कर्म्माजजानतमग्नेहेडःपरितेवृणक्तु ॥ ४५ ॥ चित्रन्देवानाम् ॥ चित्र
न्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः ॥ आप्प्राद्यावा

पृथिवीऽअन्तरिक्षद्धसूर्य्यंआत्माजगतस्तस्थुषश्च ॥४६॥ [९] इम
म्मा। हिꣳसीर्द्विपादम्पशुꣳसहस्राक्षोमेधायचीयमानः॥मयुम्पशु
म्मेधमग्नेजुषस्वतेनचिन्वानस्तन्वोनिषीद ॥ मयुन्तेशुगृच्छतुय
न्द्विष्मस्तन्तेशुगृच्छतु॥४७॥इमम्मा। हिꣳसीरेकशफम्पशुङ्कनि
क्रदंवाजिनंवाजिनेषु ॥ गौरमारण्यमनुतेदिशामितेनचिन्वानस्त
न्वोनिषीद ॥ गौरन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४८ ॥ ॥११२॥
इमꣳसाहस्रम् ॥ इमꣳसाहस्रꣳशतधारमुत्सं व्यच्यमानꣳसरिर

स्यमध्ये॥ घृतन्दुहानामदितिञ्जनायाग्ग्नेमाहिᳫंसीः परमेव्योमन्॥
गवयमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ गवयन्ते
शुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४९ ॥ इममूर्णायुं ॥ वरुणस्य
नाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम् ॥ त्वष्टुः प्रजानाम्प्रथम
ञ्जनित्रमग्ग्नेमाहिᳫंसीः परमेव्योमन् ॥ उष्ट्रमारण्यमनुतेदिशामि
तेनचिन्वानस्तन्वोनिषीद ॥ उष्ट्रन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृ
च्छतु ॥ ५० ॥ अजोहि ॥ अजोह्यग्ग्नेरजनिष्टशोकात्सोऽअपश्यज्ज

नितारमग्ग्रे ॥ तेनदेवादेवतामग्ग्रमायँस्तेनरोहमायन्नुपमेध्यासः ॥
शरभमारण्ण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ शरभन्ते
शुग्गृच्छतुयन्द्विष्मस्तन्तेशुग्गृच्छतु ॥ ५१ ॥ त्वंय्यविष्ठ । दाशुषो
नॄँश्पाहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ ५२ ॥ [ ६ ] अपा
न्त्वा ॥ अपान्त्वेमन्त्सादयाम्म्यपान्त्वोद्मन्त्सादयाम्म्यपान्त्वा
भस्म्मन्त्सादयाम्म्यपान्त्वाज्ज्योतिषिसादयाम्म्यपान्त्वायनेसाद
याम्म्यर्णवेत्त्वासदनेसादयामिसमुद्द्रेत्त्वासदनेसादयामिसरिरे

त्त्वासदनेसादयाम्म्युपान्त्वाक्षयेसादयाम्म्युपान्त्वासधिषिसाद
याम्म्युपान्त्वासदनेसादयाम्म्युपान्त्वासधस्त्थेसादयाम्म्युपा
न्त्वायोनौसादयाम्म्युपान्त्वापुरीषेसादयाम्म्युपान्त्वापाथसिसा
दयामिगायत्रेणत्त्वाच्छन्दसासादयामित्रैष्टुभेनत्त्वाच्छन्दसासाद
यामिजागतेनत्त्वाच्छन्दसासादयाम्म्यानुष्टुभेनत्त्वाच्छन्दसासाद
यामिपाङ्क्तेनत्त्वाच्छन्दसासादयामि ॥ ५३ ॥ [ १ ] अयम्पुरः ॥
अयम्पुरोभुवस्तस्यप्प्राणोभौवायनोवसन्तःप्प्राणायनोगायत्रीवा

सन्तीगायत्र्यैगायत्रङ्गायत्रादुपाᳬंशुरुपाᳬंशोस्त्रिवृत्त्रिवृतोरथन्त
रंवासिष्ठऽऋषिः प्प्रजापतिगृहीतयात्त्वयाप्प्राणङ्गृह्णामिप्प्रजा
ब्भ्यः ॥ ५४ ॥ अयन्दक्षिणा । विश्वकर्म्मातस्यमनोवैश्वकर्म्मण
ङ्ग्रीष्म्मोमानसस्त्रिष्टुब्ग्रैष्म्मीत्रिष्टुभः स्वारᳬंस्वारादन्तर्य्यामोन्त
र्य्यामात्पञ्चदशःपञ्चदशाद्बृहद्भरद्वाजऽऋषिः प्प्रजापतिगृहीतया
त्त्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥ ५५ ॥ अयम्पश्चात् ॥ अयम्प ॥११४॥
श्चाद्विश्वव्व्यचास्तस्यचक्षुर्वैश्वव्व्यचसंवर्षाश्चाक्षुष्य्योजगतीवार्षीज

गत्त्याऽऋक्क्समम्मृक्क्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरू
पञ्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्त्वया चक्षुर्ग्गृह्णामि प्रजा
भ्यः ॥ ५६ ॥ इदमुत्तरात् ॥ इदमुत्तरात्स्वस्तस्य श्रोत्रꣳ सौवꣳ
शरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थी मन्थिनऽएकविꣳशऽ
एकविꣳशाद्वैराजं विश्वामित्रऋषिः प्रजापतिगृहीतया त्त्वया श्रो
त्रङ्गृह्णामि प्रजाभ्यः ॥५७॥ इयमुपरिमतिस्तस्यै वाङ्मात्त्याहेम
न्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवतऽआग्ग्रयणऽआ

ग्ग्रयणात्रिणवत्रयस्त्रिᳫशौत्रिणवत्रयस्त्रिᳫशाब्भ्याᳫशाक्वररैवतेव्वि
श्वकर्म्मर्ऽऋषि÷प्प्रजापतिगृहीतयात्त्वयाव्वाचङ्गृह्णामिप्प्रजाब्भ्यो
लोकन्ताऽइन्द्रम् ॥ ५८ ॥ [ ५ ] इतिश्रीवाजसनेयसंहितायांत्रयो
दशोऽध्यायः ॥ १३ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ ध्रुव
क्षितिः पट्सजूर्ऋतुभिर्मूर्द्धावयोर्द्विकाविंद्राग्नीआयुर्मेपट्कावाशु
स्त्रिवृदेकाग्नेर्भागोस्येकयाचतुष्कावष्टावेकत्रिᳫशत् ॥ हरिः ॐ ध्रुव
क्षितिर्द्ध्रुवयोनिः ॥ ध्रुवाक्षितिर्द्ध्रुवयोनिर्द्ध्रुवासिद्ध्रुवंय्योनिमासीदसा

ध्रुवया ॥ उक्थ्यस्य केतुम्प्रथमञ्जुषाणाश्विनाध्वर्यूसादयतामिहत्वां
॥ १ ॥ कुलायिनीघृतवती ॥ कुलायिनीघृतवतीपुरन्धिःस्योनेसीद
सदनेपृथिव्याः ॥ अभित्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपिहि
सौभगायाश्विनाध्वर्यूसादयतामिहत्वां ॥२॥ स्वैर्दक्षैः ॥ स्वैर्दक्षैर्द
क्षपितेहसीददेवानांꣳसुम्नेबृहतेरणाय ॥ पितेवैधिसूनवऽआसुशे
वास्वावेशातन्वासंविशस्वाश्विनाध्वर्यूसादयतामिहत्वां ॥ ३ ॥
पृथिव्याःपुरीषम् ॥ पृथिव्याःपुरीषमस्यप्सोनामतान्त्वाविश्वेऽअ

भिर्गृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्प्रजावदस्स्मेद्रविणायं
जस्वाश्विनाध्वर्यूसादयतामिहत्वा ॥ ४ ॥ आदित्यास्त्वा । पृष्ठेसाद
याम्म्यन्तरिक्षस्यधर्त्रीव्विष्टम्भनीन्दिशामाधिपत्नीम्भुवनानाम् ॥
ऊर्म्मिर्द्रप्प्सोऽअपामसिव्विश्वकर्म्मातऽऋषिरश्विनाध्वर्यूसादयता
मिहत्वा ॥ ५ ॥ शुक्रश्च ॥ शुक्रश्चशुचिश्चग्ग्रैष्म्मावृतूऽअग्ग्नेरन्तः
श्लेषोसिकल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओषधयःकल्प्प
न्तामग्ग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः ॥ येऽअग्ग्नयःसमनसोन्त

राद्यावांपृथिवीऽइमे ॥ ग्रैष्म्मांवृतूऽअभिकल्प्पमानाऽइन्द्रमिवदे
वाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥६॥ [६] सजू
ऋतुभि÷सजूर्विधाभि÷सजूर्देवैःसजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वा
नरायाश्विनाध्वर्यूसादयतामिहत्वासजूर्ऋतुभि÷सजूर्विधाभि÷
सजूर्वसुभिःसजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनाध्वर्यू
सादयतामिहत्वासजूर्ऋतुभि÷सजूर्विधाभि÷सजूरुद्रैःसजूर्देवैर्व
योनाधैरग्नयेत्त्वावैश्वानरायाश्विनाध्वर्यूसादयतामिहत्वासजूर्ऋ

तुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वै
श्वानराया श्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधा
भिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानराया श्विना
ध्वर्यू सादयतामिह त्वा ॥ ७ ॥ प्राणम्मे । पाह्यपानम्मे पाहि व्यान
म्मे पाहि चक्षुर्म्मऽउर्व्या विभाहि श्रोत्रम्मे श्लोकय ॥ अपः पिन्वौ
षधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय ॥ ८ ॥ [२] मू
र्द्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयो

धिपतिश्छन्दो॑विश्वक॑र्म्मा॒वय॑÷परमे॒ष्ठीछन्दो॑ब॒स्तोवयो॑विव॒लञ्छ
न्दो॒वृ॒ष्णि॒र्व्वयो॑विशा॒लञ्छन्द॒÷पुरु॑षो॒वय॑स्त॒न्द्रञ्छन्दो॑व्या॒घ्रोव॒
योना॑धृ॒ष्टञ्छन्द॑÷सि॒ꣳहोवय॑श्छ॒दिश्छन्द॑÷पष्ठ॒वाड्वयो॑बृह॒तीच्छ
न्द॑ऽउ॒क्षावय॑÷ककु॒प्छन्द॑ऽऋष॒भोवय॑÷स॒तोबृ॑ह॒ती॒च्छन्दो॑न॒ड्वान्व
यं÷॥९॥ अ॒न॒ड्वान्वय॑÷।प॒ङ्क्तिश्छन्दो॑धे॒नुर्व्वयो॒जग॑ती॒च्छन्द॒स्त्र्यवि॒र्व्व
य॑स्त्रि॒ष्टुप्छन्दो॑दित्य॒वाड्वयो॑वि॒राट्छन्द॒÷पञ्चा॑वि॒र्व्वयो॑गाय॒त्रीच्छन्द॑
स्त्रिव॒त्सोवय॑ऽउ॒ष्णिक्छन्द॑स्तु॒र्य्य॒वाड्वयो॑नु॒ष्टुप्छन्दो॑लो॒कन्ताऽइ॒

न्द्रंम्॥ १० ॥[ २ ]इन्द्राग्ग्नीऽअव्यंथमानाम् ॥ इन्द्राग्ग्नीऽअव्यं
थमानामिष्टंकान्दृ६हतंय्युवम् ॥ पृष्ठेनद्यावांपृथिवीऽअन्तरिक्षञ्च
व्विबांधसे ॥ ११ ॥ व्विश्वकंर्म्मात्वा। सादयत्त्वन्तरिक्षस्यपृष्ठेव्यचं
स्वतीम्प्रथंस्वतीमन्तरिंक्षंय्यच्छान्तरिंक्षन्दृ६हान्तरिक्षम्माहि६
सीः ॥ विश्वंस्म्मैप्प्राणायांपानायंव्यानायोदानायंप्प्रतिष्ठायैचरि
त्रांय ॥ व्वायुष्ट्वाभिपांतुमह्यास्वस्त्याच्छर्द्दिषाशन्तमेनतयांदेवतं
याङ्गिरस्वद्ध्रुवासींद ॥ १२ ॥ शतम् ॥ ७०० ॥ राज्ञ्यंसि ॥ रा

र्य्यसिप्प्राचीदिग्विराडसिदक्षिणादिक्सम्म्राडसिप्प्रतीचीदिक्स्व
राडस्युदीचीदिगधिपत्न्यसिबृहतीदिक् ॥ १३ ॥ विश्वकर्म्मा
त्त्वा । सादयत्वन्तरिक्षस्यपृष्ठेज्ज्योतिष्म्मतीम् ॥ विश्वस्म्मैप्प्राणा
यापानायव्यानायविश्वञ्ज्योतिर्य्यच्छ ॥ वायुष्टेधिपतिस्तयादेवत
याङ्गिरस्वद्ध्रुवासीद ॥ १४ ॥ नभश्च ॥ नभस्यश्चवार्षिकावृतूऽ
अग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावापृथिवीकल्प्पन्तामापऽओष
धयःकल्प्पन्तामग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः ॥ येऽअग्नयः

समनसोन्तराद्यावापृथिवीऽइमे ॥ वार्षिकावृतूऽअभिकल्पमानाऽ
इन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥
॥ १५ ॥ इषश्च ॥ इषश्चोर्जश्चशारदावृतूऽअग्नेरन्तःश्लेषोसिक
ल्पेतान्द्यावापृथिवीऽकल्पन्तामापऽओषधयःकल्पन्तामग्नयः
पृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथि
वीऽइमे ॥ शारदावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंवि
शन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १६ ॥ [ ६ ] आयुर्म्मे ।

न्छन्दोगौश्छन्दोजाश्छन्दोश्वश्छन्दः ॥ १९ ॥ अग्निर्देवता ॥
अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारु
द्रादेवतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवते
न्द्रोदेवतावरुणोदेवता ॥ २० ॥ मूर्द्धासि ॥ मूर्द्धासिराड्ध्रुवासिधरु
णाधर्त्र्यसिधरणी ॥ आयुषेत्त्वावर्च्चसेत्त्वाकृष्ष्यैत्त्वाक्षेमायत्त्वा ॥
॥ २१ ॥ यन्त्रीराट् ॥ यन्त्रीराड्यन्त्र्यसियमनीध्रुवासिधरित्री ॥
इषेत्त्वोर्ज्जेत्त्वारय्यैत्त्वापोषायत्त्वालोकन्ताऽइन्द्रम् ॥ २२ ॥ [ ६ ]

आशुस्त्रिवृत् ॥ आशुस्त्रिवृद्भान्तःपञ्चदशोव्योमासप्तदशोधरुणं
ऽएकविꣳशःप्प्रतूर्त्तिरष्टादशस्तपोनवदशोभीवर्त्तःसविꣳशोवर्च्चो
द्वाविꣳशःसम्भरणस्त्रयोविꣳशोयोनिश्चतुर्विꣳशोगर्ब्भाःपञ्चविꣳ
शऽओजस्त्रिणवःक्क्रतुरेकत्रिꣳशःप्प्रतिष्ठात्रयस्त्रिꣳशोब्रध्नस्यविष्ट
पञ्चतुस्त्रिꣳशोनाकःषट्त्रिꣳशोविवर्त्तोष्टाचत्वारिꣳशोधर्त्त्रञ्चतुष्टोमः
॥ २३ ॥ [ १ ] अग्नेर्भागः ॥ अग्नेर्भागोसिदीक्षायाऽआधिपत्य
म्ब्रह्मस्पृतत्रिवृत्स्तोमऽइन्द्रस्यभागोसिविष्णोराधिपत्यङ्क्षत्रꣳ

स्पृतम्पञ्चदशस्तोमोनृचक्षसाम्भागोसिधातुराधिपत्यञ्जनित्रꣳस्पृ
तꣳसप्तदशस्तोमोमित्रस्यभागोसिवरुणस्याधिपत्यन्दिवोवृष्टिर्वा
तस्पृतऽएकविꣳशस्तोमोवसूनाम्भागः ॥ २४ ॥ वसूनाम्भागो
सिरुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳशस्तोमऽआदित्या
नाम्भागोसिमरुतामाधिपत्यङ्गर्भास्पृताःपञ्चविꣳशस्तोमोदित्यै
भागोसिपूष्णऽआधिपत्त्यमोजस्पृतन्त्रिणवस्तोमोदेवस्यसवितु
र्भागोसिबृहस्पतेराधिपत्यꣳसमीचीर्दिशस्पृताश्चतुष्टोमस्तोमो

यवांनाम्भागः ॥ २५ ॥ यवांनाम्भागोस्ययवानामाधिपत्यम्प्रजा
स्पृताश्चतुश्चत्वारिꣳशस्तोमंऽऋभूणाम्भागोसिविश्वेषान्देवाना
माधिपत्यम्भृतꣳस्पृतन्त्रयस्त्रिꣳशस्तोमः सहश्च ॥ २६ ॥ सहश्च ।
सहस्यश्चहैमन्तिकावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथि
वीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्याय
सव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ हैमन्ति
कावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवा ऽअभिसंविशन्तुतयादेव

तंयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २७ ॥ [ ४ ] एकयास्तुवत । प्रजाऽ
अधीयन्तप्रजापतिरधिपतिरासीत्तिसृभिरस्तुवतब्रह्मासृज्यतब्र
ह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवतभूतान्यसृज्यन्तभूता
नाम्पतिरधिपतिरासीत्सप्तभिरस्तुवतसप्तऽऋषयोसृज्यन्तधाता
धिपतिरासीन्नवभिरस्तुवत ॥ २८ ॥ नवभिरस्तुवत । पितरोसृज्य
न्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोसृज्यन्तार्त्त
वाऽअधिपतयऽआसँस्त्रयोदशभिरस्तुवतमासाऽअसृज्यन्तसंव

त्सुरोधिंपतिरासीत्पञ्चदशभिंरस्तुवतक्षुत्रमंसृज्यतेन्द्रोधिंपतिरा
सीत्सप्तदशभिंरस्तुवतग्राम्म्याः पुशवौंसृज्यन्तबृहस्पातिरधिंप
तिरासीन्नवदशभिंरस्तुवत ॥ २९ ॥ नुवदुशभिंरस्तुवत ॥ शूद्रार्य्यौ
वंसृज्येतामहोरात्रेऽअधिपत्नीऽआस्तामेकंविꣳशत्यास्तुवतैकंश
फाः पुशवौंसृज्यन्तवरुणोधिंपतिरासीत्त्रयौविꣳशत्यास्तुवतक्षु
द्राः पुशवौंसृज्यन्तपूषाधिंपतिरासीत्पञ्चविꣳशत्यास्तुवतार
ण्याः पुशवौंसृज्यन्तवायुरधिंपतिरासीत्सप्तविꣳशत्यास्तुवत

द्यावापृथिवी व्यैतां वसवो रुद्राऽआदित्याऽअनुव्यायँस्तऽएवाधिप
तयऽआसन्नवविꣳशत्यास्तुवत ॥ ३० ॥ नवविꣳशत्यास्तुवत ।
वनस्प्पतयोसृज्ज्यन्त सोमोधिपतिरासीदेकत्रिꣳशतास्तुवत प्प्रजा
ऽअसृज्ज्यन्त यवाश्चायवाश्चाधिपतयऽआसँस्त्रयस्त्रिꣳशतास्तुवत भू
तान्यशाम्म्यन्प्प्रजापतिः परमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥
॥३१॥[४] इतिश्रीवाजसनेयसंहितायां चतुर्दशोऽध्यायः ॥ १४ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ अग्नेजातान्पंचरश्मिना

सत्यायचतस्त्रोराज्यस्ययंपुरःपंचकावग्निर्मूर्द्धैकोनात्रि॑ᳲशद्येनऽऋ
षयोष्टौतपश्चनवसप्तपंचषष्टिः॥ हरिःॐ अग्नेजातान् ॥ अग्नेजा
तान्प्रणुदानꣳसपत्त्नान्प्रत्यजातान्नुदजातवेदः ॥ अधिनोब्रूहिसु
मनाऽअहेडँस्तवंस्यामशर्म्मँस्त्रिवरूथऽउद्भौ ॥ १ ॥ सहसाजातान् ॥
सहसाजातान्प्रणुदानꣳसपत्त्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अ
धिनोब्रूहिसुमनस्यमानोवयꣳस्यामप्रणुदानꣳसपत्त्नान् ॥ २ ॥
षोडशीस्तोमः ॥ षोडशीस्तोमऽओजोद्रविणञ्चतुश्चत्वारिꣳशस्तो

नाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ १० ॥ विराडसि ॥ वि
राडसिदक्षिणादिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्ता
पञ्चदशस्त्वास्तोमः पृथिव्याᳫँश्रयतुप्रउगमुक्थमव्यथायैस्तभ्ना
तुबृहत्सामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदि
वोमात्रयावरिम्णाप्रथन्तुविधर्त्ताचायमधिपतिश्चतेत्वासर्वेसंवि
दानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ ११ ॥ सम्राडसि।
प्रतीचीदिगादित्यास्तेदेवाऽअधिपतयोवरुणोहेतीनाम्प्रतिधर्त्ता

सप्तदुशस्त्वास्तोमः पृथिव्याᳫंश्रयतुमरुत्वतीयमुक्थमव्यथायै
स्तभ्नातुवैरूपᳫंसामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथम
जादेवेषुदिवोमात्रयावरिम्णाप्रथन्तुविधर्त्ताचायमधिपतिश्च्चते
त्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥१२॥
स्वराडसि ॥ स्वराडस्युदीचीदिङ्मरुतस्तेदेवाऽअधिपतयःसोमोहेती
नाम्प्रतिधर्त्तैकविᳫंशस्त्वास्तोमः पृथिव्याᳫंश्रयतुनिष्केवल्यमु
क्थमव्यथायैस्तभ्नातुवैराजᳫंसामप्रतिष्ठित्याऽअन्तरिक्षऽऋषय

स्त्वाप्प्रथमुजादेवेषुदिवोमात्रंयावरिम्म्णाप्प्रथन्तुविधुर्त्ताचायम
धिंपतिश्चुतेत्त्वासर्वेसंविदुानानाकंस्यपृष्ठेस्वुर्ग्गेलोकेयजमानञ्चसा
दयन्तु ॥ १३ ॥ अधिपत्न्यसि ॥ वृहुतीदिग्ग्विश्श्वेतेदेवाऽअधिंप
तयोवृहुस्प्पतिर्हेतीनाम्प्रतिधुर्त्तात्रिणवत्रयस्त्रिंहुशौत्त्वास्तोमौपृ
थिव्याᳬंश्रयतांवैश्श्वदेवाग्निमारुतेऽउक्थेऽअव्यथायैस्तब्भीताᳬं
शाक्करैवुतेसामनीप्प्रतिष्ठित्याऽअुन्तरिक्षुऋषयस्त्वाप्प्रथमुजादे
वेषुदिवोमात्रयावरिम्म्णाप्रथन्तुविधुर्त्ताचायमधिंपतिश्चुतेत्त्वास

वैसंविदानानाकंस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥ १४ ॥ [५]
अयम्पुरः ॥ अयम्पुरोहरिकेशःसूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौ
जाश्चसेनानीग्ग्रामण्यौ ॥ पुञ्जिकस्त्थलाचक्रतुस्त्थलाचाप्सरसौ
दङ्क्ष्णवःपशवोहेतिःपौरुषेयोवधःप्रहेतिस्तेभ्योनमोऽ अस्तुतेनो
वन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः
॥ १५ ॥ अयन्दक्षिणा । विश्वकर्म्मातस्यरथस्वनश्चरथेचित्रश्चसे
नानीग्ग्रामण्यौ ॥ मेनकाचसहजन्याचाप्सरसौयातुधानाहेती

रक्षाᳬंसिप्प्रहेतिस्तेब्भ्योनमोऽ अस्तुतेनोवन्तुतेनोम्मृडयन्तुतेय
न्द्विष्ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥ १६ ॥ अयम्पुश्चात् ॥
अयंपश्चाद्विश्वव्यचास्तस्यरथंप्प्रोतश्चासंमरथश्चसेनानीग्ग्राम
ण्ण्यौ ॥ प्रम्म्लोचन्तीचानुम्म्लोचन्तीचाप्प्सरसौव्व्याग्घ्राहेतिश्स
र्प्पाःप्प्रहेतिस्तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्वि
ष्ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥ १७ ॥ अयमुत्तरात् ॥
अयमुत्तरात्संयद्वसुस्तस्यतार्क्ष्यश्चारिष्टनेमिश्चसेनानीग्रामण्ण्यौ ॥

विश्वाचीचघृताचीचाप्सुरसौवापोहेतिर्वातः प्रहेतिस्तेभ्योनमो
ऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्ज
म्भेदध्मः ॥१८॥ अयमुपरि ॥ अयमुपर्य्यर्वाग्वसुस्तस्यसेनजि
च्चसुषेणश्चसेनानीग्ग्रामण्यौ ॥ उर्वशीचपूर्वचित्तिश्चाप्सरसावव
स्फूर्ज्जन्हेतिर्विद्युत्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडय
न्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १९ ॥ [ ५ ]
अग्निर्म्मूर्द्धा । दिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬरेताᳬसि

जिन्वति ॥ २० ॥ अयमग्निः । सहस्रिणोवाजस्यशतिनस्पतिः ॥
मूर्द्धाकवीरयीणाम् ॥ २१ ॥ त्वामग्ने ॥ त्वामग्नेपुष्करादध्यथर्वा
निरमन्थत ॥ मूर्द्धोविश्वस्यवाघतः ॥ २२ ॥ भुवोयज्ञस्य ॥ भुवोय
ज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशिवाभिः ॥ दिविमूर्द्धानन्द
धिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥ २३ ॥ अबोध्यग्निः । समि
धाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाइवप्रवयामुज्जि
हानाःप्रभानवःसिस्रतेनाकमच्छ ॥ २४ ॥ अवोचामकवये ।

अवोचामकवयेमेध्यायवचोवन्दारुवृषभायवृष्णे ॥ गविष्ठिरोनम
सास्तोममग्नौदिवीवरुक्ममुरुव्यञ्चमश्रेत् ॥ २५ ॥ अयमिह । प्रथ
मोधायिधातृभिर्होतायजिष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृग
वोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ २६ ॥ जनस्यगोपाः ॥ जन
स्यगोपाऽअजनिष्टजागृविरग्निःसुदक्षःसुवितायनव्यसे ॥ घृतप्र
तीकोबृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यःशुचिः ॥ २७ ॥
त्वामग्ने ॥ त्वामग्नेऽअङ्गिरसोगुहाहितमन्वविन्दञ्छिश्रियाणंव

नेवने ॥ सजायसेमत्थ्यमानुःसहोमहत्त्वामाहुःसहंसस्पुत्रमङ्गिरः
॥ २८ ॥ सखायःसम् ॥ सखायःसंवःसम्यञ्चमिषꣳस्तोमञ्चाग्नये ॥
वर्षिष्ठायक्षितीनामूर्ज्जोनप्त्रेसहस्वते ॥ २९ ॥ सꣳसमित् ॥ सꣳसमि
द्युवसेवृषन्नग्नेविश्वान्यर्य्यऽआ ॥ इडस्पदेसमिद्ध्यसेसनोवसून्या
भर ॥ ३० ॥ त्वाञ्चित्रश्रवस्तम ॥ हवन्तेविक्षुजन्तवः ॥ शोचिष्केशं
पुरुप्प्रियाग्नेहव्यायवोढवे ॥ ३१ ॥ एनावः ॥ एनावोऽअग्निन्नम
सोर्ज्जोनपातमाहुवे ॥ प्रियञ्चेतिष्ठमरतिꣳस्वध्वरंविश्वस्यदूतममृतम्

॥ ३२ ॥ विश्वंस्यदूतम् ॥ विश्वंस्यदूतमुमृतंविश्वंस्यदूतमुमृतंम् ॥ स
योजतेऽअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः ॥ ३३ ॥ सदुद्रवत् ।
सदुद्रवत्स्वाहुतःसदुद्रवत्स्वाहुतः ॥ सुब्रह्मायुज्ञःसुशमीवसूनान्देवꣳराधोजनानाम् ॥ ३४ ॥ अग्नेवाजंस्य ॥ अग्नेवाजंस्युगोमंतुऽई
शानःसहसोयहो ॥ अस्मेधेहिजातवेदोमहिश्रवं ॥ ३५ ॥ सऽइ
धानः ॥ सऽइधानोवसुष्कविरग्निरीडेन्योगिरा ॥ रेवदुस्मभ्यंम्पु
र्वणीकदीदिहि ॥ ३६ ॥ क्षपोराजन् ॥ क्षपोराजन्नुतत्मनाग्नेवस्तो

रुतोपसं÷ ॥ सतिग्ग्मजम्भरक्षसोदह्प्रति ॥३७॥ भुद्रोनं÷ ॥ भुद्रो
नोऽअुग्निराहुतोभुद्रारातिश्शुभगभुद्रोऽअध्वुरः ॥ भुद्राऽउतप्प्रश
स्तय्ह ॥ ३८ ॥ भुद्राऽउत । प्प्रशस्तयोभुद्रम्मनं÷कृणुष्ववृत्रतूर्य्यै ॥
येनासुमत्सुसासहं÷ ॥ ३९ ॥ येनासुमत्सु । सासहोवंस्त्थिरातनुहि
भूरिशर्द्धताम् ॥ वुनेमातेऽअुभिष्टिभि्ह ॥ ४० ॥ अुग्निन्तम् ॥ अुग्नि
न्तम्मन्न्येयोवसुरस्तंय्यंय्यन्तिधेनवं÷ ॥ अस्तुमर्वन्तऽआशवोस्त
न्नित्यासोवाजिनुऽइषंस्तोतृभ्युऽआभर ॥४१॥ सोऽअुग्निश्॥सोऽ

अग्निर्य्योविसुङ्गृणेसंय्यमायन्तिधेनवः ॥ समर्वन्तोरघुद्रुवःसं
सुजातासःसूरयऽइषंस्तोतृभ्यऽआभर ॥ ४२ ॥ उभेसुश्चन्द्र ।
सर्प्पिषोदर्वीश्रीणीषऽआसनि ॥ उतोनऽउत्पुपूर्य्याऽउक्थेषुशवस
स्पतऽइषंस्तोतृभ्यऽआभर ॥ ४३ ॥ अग्नेतम् ॥ अग्नेतमद्याश्व
न्नस्तोमैःक्रतुन्नभद्रंहृदिस्पृशम् ॥ ऋध्यामातऽओहैः ॥ ४४ ॥ अ
धाहि ॥ अधाह्यग्नेक्रतोर्भद्रस्यदक्षस्यसाधोः ॥ रथीर्ऋतस्यबृह
तोबभूथ ॥ ४५ ॥ एभिर्न्नः ॥ एभिर्न्नोऽअर्कैर्भवानोऽअर्वाङ्स्वर्ण

ज्ज्योतिः ॥ अग्नेविश्वेभिः सुमनाऽअनीकैः ॥ ४६ ॥ अग्निꣳहो
तारम् ॥ अग्निꣳहोतारम्मन्ये दास्वन्तंव्वसुꣳ सूनुꣳसहसोजातवेदसं
व्विप्रन्नजातवेदसम् ॥ यऽऊर्द्ध्वयास्वद्ध्वरोदेवोदेवाच्याकृपा ॥ घृतस्य
विभ्राष्टिमनुवष्टिशोचिषाजुह्वानस्यसर्प्पिषः ॥ ४७ ॥ अग्नेत्वम् ॥
अग्नेत्वन्नोऽअन्तमऽउतत्त्राताशिवोभवावरूथ्यः ॥ वसुरग्निर्व्वसु
श्श्रवाऽअच्छानक्षिद्युमत्तमꣳरयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवः सु
म्नायनूनमीमहेसखिब्भ्यः ॥ ४८ ॥ [ २९ ] येनऽऋषयः ॥ येनऽऋ

पंयस्तपंसासत्रमायन्निन्धानाऽअग्निꣳस्वंराभरंन्तः ॥ तस्मिन्नह
न्निदंधेनाकेंऽअग्निरयमाहुर्म्मनंवस्तीर्णबंर्हिषम् ॥ ४९ ॥ तम्पत्नी
भिः ॥ तम्पत्नींभिरनुंगच्छेमदेवाःपुत्रैर्भ्रातृंभिरुतवाहिरंण्यैः ॥
नाकंङ्गृभ्णानाःसुंकृतस्यंलोकेतृतीयेंपृष्ठेऽअधिंरोचनेदिवः ॥ ५० ॥
आवाचः ॥ आवाचोमध्यंमरुहद्भुरण्युरयमग्निःसत्पंतिश्चेकिंता
नः ॥ पृष्ठेपृंथिव्यानिहिंतोदविंद्युतदधस्पदङ्कृणुतांयेपृंतन्यवंः
॥ ५१ ॥ अयमग्निः ॥ अयमग्निर्वीरतंमोवयोधाःसंहस्रियोंद्योत

तामप्र्यच्छन् ॥ विभ्राजमानꣳसरिरस्यमद्ध्यऽउपप्प्रयाहिदिव्या
निधाम ॥ ५२ ॥ सम्प्रच्यवद्ध्वमुप । सम्प्रयाताग्नेपथोदेवयाना
न्कृणुद्ध्वम् ॥ पुनꣳकृण्वानाःपितरायुवानान्वाताꣳसीत्त्वयितन्तुमे
तम् ॥ ५३ ॥ उद्बुध्यस्व ॥ उद्बुध्यस्वाग्नेप्प्रतिजागृहित्वमिष्टापूर्त्ते
सꣳसृजेथामयञ्च ॥ अस्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवाय
जमानश्चसीदत ॥ ५४ ॥ येनवहसि । सहस्रंय्येनाग्नेसर्व्ववेद
सम् ॥ तेनेमंय्यज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ५५ ॥ अयन्ते ॥ अय

न्तेयोनिंऽर्क्तिवयोयतौजातोऽअरोचथाः ॥ तञ्जानन्नग्नऽआरोहा
थानोवर्द्धयारयिम् ॥ ५६ ॥ [ ८ ] तपश्च ॥ तपश्चतपस्यश्चशैशिरा
वृतूऽ अग्नेरन्तः श्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामाप
ऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽअ
ग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ शैशिरावृतूऽअभिकल्प
मानाऽइन्द्रमिवदेवाऽ अभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसी
दतम् ॥ ५७ ॥ परमेष्ठीत्त्वा । सादयतुदिवस्पृष्ठेज्ज्योतिष्मतीम् ॥

विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ॥ सूर्य्यस्ते
धिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥५८॥ लोकम्पृण ॥ छिद्र
म्पृणाथो सीद ध्रुवा त्वम् ॥ इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनाव
सीषदन् ॥५९॥ ताऽअस्य । सूददोहसः सोमं श्रीणन्ति पृश्नयः ॥
जन्मन्देवानां विशस्त्रिष्वारोचने दिवः ॥ ६० ॥ इन्द्रं विश्वाः ॥ इन्द्रं
विश्वाऽअवीवृधन्त्समुद्रव्यचसं गिरः ॥ रथीतमं रथीनां वाजाना
ᳩसत्पतिम्पतिम् ॥ ६१ ॥ प्रोथदश्वः ॥ प्रोथदश्वो न यवसे विष्य

च्छदामहश्संवरणाद्वस्त्यात् ॥ आदस्यवातोऽअनुवातिशोचिरधं
स्म्मतेव्व्रजंनकृष्णमंस्ति ॥ ६२ ॥ आयोष्ट्वा ॥ आयोष्ट्वासदनेसाद
याम्म्यवतश्छायायांᳫंसमुद्रस्यहृदये ॥ रश्म्मीवतीम्भास्वतीमा
याद्याम्भास्यापृथिवीमोर्व्वन्तरिक्षम् ॥ ६३ ॥ परमेष्ठीत्वा । सादयतु
दिवस्पृष्ठेव्यचस्वतीम्प्रथस्वतीन्दिवंय्यच्छदिवन्दृᳫंहदिवम्माहिᳫं
ᳫंसीः ॥ विश्वस्म्मैप्प्राणायापानायव्यानायोदानायप्प्रतिष्ठायैच
रित्राय ॥ सूर्य्यस्त्वाभिपातुमह्यास्वस्त्याच्छर्दिषाशन्तमेनतया

देवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६४ ॥ सहस्रस्यप्रमा । सिसहस्रस्य
प्रतिमासिसहस्रस्योन्मासिसाहस्रोसिसहस्रायत्त्वा ॥ ६५ ॥ [ ९ ]
इतिश्रीवाजसनेयसंहितायांपञ्चदशोऽध्यायः ॥ १५ ॥ श्रीवेदपुरुषा
यनमः ॥ अनुवाकसूत्रम् ॥ नमस्तेषोडशहिरण्यबाहवऽउष्णीषि
णेतक्षभ्योज्येष्ठायपंचकाःस्तुत्यायचतस्रःशंभवायैकापार्यायपंच
द्रापेअंधसोविᳪशतिर्नवषट्षष्टिः ॥ हरिः ॐ नमस्ते ॥ नमस्तेरुद्र
मन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ १ ॥ यातेरुद्र

शिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ता
भिचाकशीहि ॥ २ ॥ यामिषुम् ॥ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्य
स्तवे ॥ शिवाङ्गिरित्रताङ्कुरुमाहिꣳसीःपुरुषञ्जगत् ॥ ३ ॥ शिवेन
वचसा । त्वागिरिशाच्छावदामसि ॥ यथानःसर्व्वमिज्जगदयक्ष्मꣳ
सुमनाऽअसत् ॥ ४ ॥ अध्यवोचत् ॥ अध्यवोचदधिवक्ताप्प्रथमोदै
व्योभिषक् ॥ अहीꣳश्चसर्व्वाञ्जम्भयन्त्सर्व्वाश्चयातुधान्न्योधराचीःप
रासुव ॥ ५ ॥ असौयः ॥ असौयस्ताम्म्रोऽअरुणऽउतबभ्रुःसुम

ङ्गलं॥ येचैन६ रुद्राऽअभितोदिक्षुश्रिताःसहस्रशोवैषा६हेडऽईं
महे ॥६॥ असौयः ॥ असौयोवसर्प्पतिनीलग्ग्रीवोविलोहितः॥उतैनं
ङ्गोपाऽअंदृश्श्रन्नदृश्श्रन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥ नमो
स्तु ॥ नमोस्तुनीलग्ग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेऽअस्यसत्वा
नोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्च ॥ प्रमुञ्चधन्न्वनस्त्वमुभयोरा
र्त्न्योर्ज्याम् ॥ याश्चतेहस्तऽइषवः परातार्भगवोवप ॥ ९ ॥ विज्ज्य
न्धनुः । कपर्दिनोविशल्योबाणवाँ२उत ॥ अनेशन्नस्ययाऽइषवऽ

आभुरंस्यनिषङ्गधिः ॥ १० ॥ यातें ॥ हेतिर्म्मीढुष्टमहस्तेंबभूवंते
धनुं÷ ॥ तयास्म्मान्विश्वतस्त्वमंयक्ष्म्मयापरिंभुज ॥११॥ परिंते ॥
परिंतेधन्वंनोहेतिरस्म्मान्वृंणक्तुविश्वतं÷ ॥ अथोयऽइंषुधिस्तवा
रेऽअस्म्मन्निधेंहितम् ॥ १२ ॥ अवतत्यधनुं÷ ॥ अवतत्यधनुष्ट्वꣳ
सहंस्राक्षशतेंषुधे ॥ निशीर्य्यंशल्यानाम्मुखांशिवोनं÷सुमनांभव
॥ १३ ॥ नमंस्ते ॥ नमंस्तऽआयुंधायानांततायधृष्णवें ॥ उभा
भ्यांमुततेनमोंबाहुभ्यान्तवधन्वंने ॥ १४ ॥ मानं÷ ॥ मानों

॥ १६ ॥ [ १६ ] भाममनोब्रू न्यैदिशाञ्चपतयेनमोनमो नमोनमं÷शषि

शतम् ॥ १० ॥ यातें ॥ हेतिम्मींढुष्टमहस्तेंबभूवते
धनश्श्वतस्त्वमंयक्ष्मयापारिंभुज ॥ ११ ॥ परिंते ॥
येनमोनमोरुद्रायांततार्यिवृंणक्कुविश्वतं÷ ॥ अथोयऽइंषुधिस्तवा
न्त्यैवनांनाम्पतंयेनमोनमर ॥ अवतत्यधनुं÷ ॥ अवतत्यधनुष्ट्व
स्त्थपतंयेवृक्षाणाम्पतंयेनमोन्यैंशल्यानाम्मुखांशिवोनं÷सुमनांभव
म्पतंयेनमोनमोमन्त्रिणेंवाणिआयुंधायानांततायधृष्णवें ॥ उभा
ग्घौंषायाक्क्रन्दयंतेपत्तीनाम्पतयत्र्ग्वंने ॥ १४ ॥ मानं÷ ॥ मानो

नमः॑कृत्स्नायतया। धावंतेसत्त्वनाम्पतयेनमोनमः॑सहमानायनि
व्याधिनंऽआव्याधिनीनाम्पतयेनमोनमोनिषङ्गिणेककुभायस्ते
नानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्यानाम्पतयेनमोन
मोवञ्चते ॥ २० ॥ नमोवञ्चते। परिवञ्चतेस्तायूनाम्पतयेनमोनमो
निषङ्गिणंऽइषुधिमतेतस्कराणाम्पतयेनमोनमः॑सृकायिभ्योजि
घांसद्भ्योमुष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्ता
नाम्पतयेनमः॑ ॥ २१ ॥ [ ५ ] नमंऽउष्णीषिणे। गिरिचरायकु

लुञ्चानाम्पतयेनमोनमऽ इषुमद्भ्योधन्वायिभ्यश्चवोनमोनमऽआ
तन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्च
वोनमोनमोविसृजद्भ्यः ॥ २२ ॥ नमोविसृजद्भ्योविध्यद्भ्यश्चवोनमो
नमः स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमःशयानेभ्यऽआसीनेभ्य
श्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनमः सभाभ्यः ॥ २३ ॥
नमः सभाभ्यः । सभापतिभ्यश्चवोनमोनमोश्वेभ्योश्वपति
भ्यश्चवोनमोनमऽआव्याधिनीभ्योविविध्यन्तीभ्यश्चवोनमोन

मऽउगणाभ्यस्तृᳪहतीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ न
मोगणेभ्यो । गणपतिभ्यश्चवोनमोनमोव्व्रातेभ्योव्व्रातपतिभ्य
श्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोव्विरूपेभ्यो
व्विश्वरूपेभ्यश्चवोनमोनमःसेनाभ्यः ॥ २५ ॥ नमःसेनाभ्यः ।
सेनानिभ्यश्चवोनमोनमो रथिभ्योऽअरथेभ्यश्चवोनमोनमः
क्षत्तृभ्यःसङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवो
नमः ॥ २६ ॥ [ ५ ] नमस्तक्षभ्यः ॥ नमस्तक्षभ्योरथकारे

भ्यश्चवोनमोनमःकुलालेभ्यःकर्म्मारेभ्यश्चवोनमोनमोनिषादे
भ्यःपुञ्जिष्ठेभ्यश्चवोनमोनमःश्वनिभ्योमृगयुभ्यश्चवोनमोन
मःश्वभ्यः ॥२७॥ नमःश्वभ्यःश्वपतिभ्यश्चवोनमोनमोभवा
यचरुद्रायचनमःशर्वायचपशुपतयेचनमोनीलग्रीवायचशि
तिकण्ठायचनमःकपर्दिने ॥ २८ ॥ नमःकपर्दिने ॥ चव्युप्तके
शायचनमःसहस्राक्षायचशतधन्वनेचनमोगिरिशयायचशिपि
विष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥ २९ ॥ नमोह्

स्वार्य । चव्वामुनायंचुनमोवृहुतेचुव्वर्षीयसेचुनमोवृद्धायंचसुवृधेच
नमोऽग्र्यायचप्प्रथुमायंचुनम॑ऽआुशवे ॥३०॥ नम॑ऽआुशवे । चाजि
रायंचुनमुःशीग्घ्र्यायचुशीब्भ्यायचुनमुऽऊर्म्म्यायचावस्वुन्न्याय
चुनमोनादेुयायंचुद्वीप्प्यायच ॥३१॥ [५] नमोज्ज्येुष्ठाय । चकनि
ष्ठायंचुनम॑ःपूर्व्वजायंचापरजायंचुनमोमद्ध्यमायंचापगल्भायंच
नमोजघुन्न्यायचबुद्धयायचुनमुःसोब्भ्याय ॥ ३२ ॥ नमुःसोब्भ्या
य ॥ चप्प्रतिसुर्य्यायचुनमोयाम्म्यायचुक्षेम्म्यायचुनमुःश्लोक्क्या

यचावसान्न्यायचनमऽउर्व्वर्य्यायचखल्ल्यायचनमोवन्न्याय ॥ ३३ ॥
नमोवन्न्याय । चकक्ष्यायचनमःश्श्रवायचप्प्रतिश्श्रवायचनमऽ
आशुषेणायचाशुरथायचनमःशूरायचावभेदिनेचनमोबिल्मिने
॥ ३४ ॥ नमोबिल्मिनेचकवचिनेचनमोवर्म्मिणेचवरूथिनेचन
मःश्श्रुतायचश्श्रुतसेनायचनमोदुन्दुब्भ्यायचाहनन्न्यायचनमो
धृष्णवे ॥ ३५ ॥ नमोधृष्णवे । चप्प्रमृशायचनमोनिषङ्गिणेचेषु
धिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमःस्वायुधायचसुधन्न्वनेच

॥ ३६ ॥ [५] नमःस्रुत्याय । चपत्थ्यायचनमःकाट्यायचनीप्प्यां
यचनमःकूल्यायचसरस्यायचनमोनादेयायचवैशन्तायचनमःकू
प्प्याय ॥ ३७ ॥ नमःकूप्प्याय । चावट्यायचनमोवीध्र्यायचात
प्प्यायचनमोमेघ्यायचविद्युत्यायचनमोवर्ष्यायचावर्ष्यायच
नमोवात्याय ॥ ३८ ॥ नमोवात्याय । चरेष्म्यायचनमोवास्तव्या
यचवास्तुपायचनमःसोमायचरुद्रायचनमस्ताम्रायचारुणायच
नमः शङ्गवे ॥ ३९ ॥ नमः शङ्गवे । चपशुपतयेचनमऽउग्रायचभी

मायंचनमोऽग्रेवधायंचदूरेवधायंचनमोहन्त्रेचहनीयसेचनमोवृ
क्षेभ्योहरिकेशेभ्योनमंस्ताराय ॥ ४० ॥ [ ४ ] नमं÷शम्भवायं ।
चमयोभवायंचनमं÷शङ्करायंचमयस्करायंचनमं÷शिवायंचशि
वतंरायच ॥ ४१ ॥ [ १ ] नमःपार्य्यायचावार्य्यायचनमं÷प्रतरं
णायचोत्तरंणायचनमस्तीर्त्थ्यायचकूल्यायचनम÷शष्प्यायच
फेन्यायचनमं÷सिकत्त्याय ॥ ४२ ॥ नमं÷सिकत्यायचप्रवाह्या
यचनमं÷किꣳशिलायंचक्षयणायंचनमं÷कपर्दिनेचपुलस्तयेचन

मंऽइरिण्यायचप्रपत्थ्यायचनमोव्व्रज्ज्याय ॥ ४३ ॥ नमोव्व्रज्ज्याय ।
चगोष्ठ्यायच नमस्तल्प्प्यायचगेह्यायच नमोहृदय्यायचनिवे
ष्प्यायचनमः काट्यायचगह्वरेष्ठायचनमः शुष्क्याय ॥ ४४ ॥ नमः
शुष्क्याय । चहरित्यायचनमः पाᳪसव्यायचरजस्यायचनमोलो
प्प्यायचोलप्प्यायचनमऽऊर्व्यायचसूर्व्यायचनमः पर्ण्णाय ॥
॥ ४५ ॥ नमः पर्ण्णाय । चपर्ण्णशदायचनमऽउद्गुरमाणायचाभिघ्न
तेचनमऽआखिदतेचप्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोन

मोनमोवꣳकिरिकेभ्योदेवानाꣳहृदयेभ्योनमोविचिन्वत्केभ्यो
नमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥ ४६ ॥ [ ५ ] द्रापेऽअ
न्धसꣳ। द्रापेऽअन्धसस्पतेदरिद्रनीललोहित ॥ आसाम्प्रजानामेषा
म्पशूनाम्माभेर्म्मारोङ्मोचनꣳकिञ्चनाममत् ॥ ४७ ॥ इमारुद्राय ।
तवसेकपर्द्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्विपदेच
तुष्पदेविश्वम्पुष्टङ्ग्रामेꣳअस्मिन्ननातुरम् ॥ ४८ ॥ यातें । रुद्र
शिवातनूःशिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतयानोमृड

जीवसे ॥ ४९ ॥ परिनऽ ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्म्म
तिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड
॥ ५० ॥ मीढुष्टमशिवतम ॥ शिवोनः सुमनाभव ॥ परमेवृक्षऽआयु
धन्निधायकृत्तिंवसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकि
रिद्रविलोहित । नमस्तेऽअस्तुभगवऽ ॥ यास्तेसहस्रꣳहेतयोन्यम
स्मन्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशः ॥ सहस्राणिसहस्र
शोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधि

॥ ५३ ॥ असंङ्ख्यातासहस्राणि । येरुद्राऽअधिभूम्म्याम् ॥ तेषाꣳ
सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५४ ॥ अस्म्मिन्न्महति । अस्म्मि
न्न्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषाꣳसहस्रयोजनेवधन्न्वानि
तन्न्मसि ॥ ५५ ॥ नीलग्ग्रीवाःशितिकण्ठाः ॥ नीलग्ग्रीवाःशिति
कण्ठादिवꣳरुद्राऽउपश्रिताः ॥ तेषाꣳसहस्रयोजनेवधन्वानित
न्न्मसि ॥ ५६ ॥ नीलग्ग्रीवाःशितिकण्ठाः शर्वाऽअधःक्षमाचराः ॥
तेषाꣳसहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५७ ॥ येवृक्षेषु । शष्प्प

ञ्जरानीलग्ग्रीवाविलोहिताः॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥ ५८ ॥ येभूतानाम् ॥ येभूतानामधिपतयोविशिखासःकपर्द्दिनः॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥ ५९ ॥ येपथाम् ॥ येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥ ६० ॥ येतीर्त्थानि । प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषांᳯसहस्रयोजनेवधन्वानितन्मसि ॥ ६१ ॥ येन्नेषु । विविध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषांᳯसहस्रयोजनेवधन्वानित

त्नमसि ॥ ६२ ॥ यऽएतावन्तꣳ ॥ यऽएतावन्तश्च भूयांꣳसश्च दिशो
रुद्रावितस्थिरे ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥
नमोस्तु । रुद्रेभ्योयेदिवियेषांवर्षमिषवः ॥ तेभ्योदशप्राचीर्दश
दक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोऽ अस्तुतेनो
वन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः
॥ ६४ ॥ नमोस्तु । रुद्रेभ्योयेन्तरिक्षेयेषांवातऽइषवः ॥ तेभ्योद
शप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥ तेभ्योन

मोऽअस्तुतेनोॅवन्तुतेनोॅमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषा
ञ्जम्भेदध्मः ॥ ६५ ॥ नमोस्तु । रुद्रेभ्योयेपृथिव्यांयेषामन्न
मिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्द
शोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोॅवन्तुतेनोॅमृडयन्तुतेयन्द्विष्मोय
श्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥ [ २० ] इतिश्रीवाजसनेय
संहितायांषोडशोऽध्यायः ॥ १६ ॥ श्रीवेदपुरुषायनमः अनुवाकसू
त्रम् ॥अश्मन्नूर्जंदशनमस्तेपंचाग्निस्तिग्मेननवचक्षुषःपिताष्टावाशुः

शिशानःसप्तदशोदेनंक्रमध्वमग्निनापंचदशकौशुक्रज्योतिःसप्तेम

ॐस्तनंत्रयोदशनवैकोनशतं ॥ हरिःॐअश्मन्नूर्जम् ॥ अश्मन्नूर्ज्जं

म्पर्वतेशिश्रियाणामद्भ्यऽओषधीभ्योवनस्पतिभ्योअधिसम्भृ

तम्पयः ॥ तान्नऽइषमूर्जन्धत्तमरुतःसंरराणाऽअश्मंस्तेक्षुन्म

यितऽऊर्ग्गयंद्विष्मस्तन्तेशुगृच्छतु ॥ १ ॥ इमामे । अग्नऽइष्टं

काधेनवःसन्त्वेकाचदशचदशचशतञ्चशतञ्चसहस्रञ्चसहस्रञ्चायु

तञ्चायुतञ्चनियुतञ्चनियुतञ्चप्रयुतञ्चार्बुदञ्चन्यर्बुदञ्चसमुद्रश्चमध्य

श्रान्तंश्चपरार्द्धश्चैतामें॓ऽअग्नऽइष्टंकाधेनवं॑ सन्त्वमुत्रामुष्मिँल्लोके
॥ २ ॥ ऋतवंस्त्थ । ऽऋतावृधंऽऋतुष्ठास्त्थंऽऋतावृधं॑ ॥ घृतश्चु
तौमधुश्चुतौविराजोनामंकामदुघाऽअक्षीयमाणाः ॥ ३ ॥ समुद्र
स्यंत्वा ॥ समुद्रस्यत्वावंकयाग्नेपरिंव्ययामसि ॥ पावकोऽअस्म
भ्यंᳬशिवोभंव ॥ ४ ॥ हिमस्यंत्त्वा । जरायुणाग्नेपरिंव्ययामसि ॥
पावकोऽअस्मभ्यंᳬशिवोभंव ॥ ५ ॥ उपज्मन् । उपज्मन्नुपंवे
तसेवंतरनदीष्ष्वा ॥ अग्नेंपित्तमपामंसिमण्डूंकिताभिरागंहिसेम

न्नोयज्ञम्पावकवर्ण्ण६शिवङ्कृधि ॥ ६ ॥ अपामिदम् ॥ अपामिदन्न्य
यन६समुद्रस्यनिवेशनम् ॥ अन्न्याँस्तेऽअस्म्मत्तपन्तुहेतयः पाव
कोऽअस्म्मब्भ्यं६शिवोभव ॥ ७॥ अग्नेपावक । रोचिषामन्द्रया
देवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ८ ॥ सनः पावकदीदिवोग्ने
देवाँ२ऽइहावह ॥ उपयज्ञ६हविश्चनः ॥ ९ ॥ पावकयायः ॥ पाव
कयायश्चितयन्त्याकृपाक्षामन्रुरुचऽउषसोनभानुना ॥ तूर्वन्नयाम
न्नेतशस्यनूरणऽआयोघृणेनततृषाणोअजरः ॥ १० ॥ [ १० ] नम

स्ते ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्च्चिषे ॥ अन्याँस्तेऽअस्स्म
त्तपन्तुहेतयः पावकोऽअस्म्मब्भ्यꣳशिवोभव ॥ ११ ॥ नृषदेवेट् ॥
नृषदेवेडप्प्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्वर्विदेवेट् ॥ १२ ॥ येदेवाः ॥
येदेवादेवानांय्यज्ञियायज्ञियानाꣳसंवत्सरीणमुपभागमासते ॥ अ
हुतादोहविषोयज्ञेऽअस्स्मिन्त्स्वयम्पिबन्तुमधुनोघृतस्य ॥ १३ ॥
येदेवाः ॥ येदेवादेवेष्ष्वधिदेवत्त्वमायन्न्येब्ब्रह्मणःपुरऽएतारोऽअ
स्य ॥ येब्भ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्व्याऽअधिस्नु

षुं ॥ १४ ॥ प्राणदाअंपानदाऽ॥ प्राणदाऽअंपानदाव्यांनदावंर्च्चोदा
वंरिवोदाः ॥ अन्न्यांस्तेंऽअस्म्मत्तंपन्तुहेतयं÷पावकोऽअस्म्मब्भ्यं
ॐशिवोभंव ॥ १५ ॥ [५] अग्निस्तिग्ग्मेनं । शोचिषायासद्विश्श्व
न्न्युत्रिणम् ॥ अग्निर्न्नोंवनतेरयिम् ॥ १६ ॥ यऽइमा । विश्श्वाभुवंना
निजुह्वदृषिर्होतान्न्यसींदत्पितानं÷ ॥ सऽआशिषाद्रविंणमिच्छमां
नःप्रथमच्छदवंराँ२आविंवेश ॥ १७ ॥ किठंस्वित् ॥ किठंस्विदा
सींदधिष्ठानंमारम्भंणङ्कतमस्वित्कथासींत् ॥ यतोभूमिंञ्जनयंन्वि

श्वकर्म्मा विद्यामौर्ण्णौन्महिनाविश्वचंक्षाः ॥ १८ ॥ विश्वतंश्चक्षु
रुत । विश्वतोमुखोविश्वतोबाहुरुतविश्वतंस्पात् ॥ सम्बाहुभ्भ्या
न्धमंतिसम्पतंत्रैर्द्यावाभूमींजनयंन्देवऽएकः ॥१९॥ किᳪंस्वित् ॥
किᳪंस्विद्वनङ्कऽउसवृक्षऽआंसयतोद्यावांपृथिवीनिंष्टतक्षुः ॥ मनी
पिणोमनंसापृच्छतेदुतद्यदुध्यातिंष्ठद्भुवंनानिधारयंन् ॥ २० ॥ या
तें ॥ यातेधामांनिपरमाणियावमायामंध्यमाविंश्वकर्म्मन्नुतेमा ॥
शिक्षासखिंभ्योहविषिंस्वधावःस्वयंय्यंजस्वतन्वंवृधानः ॥ २१ ॥

विश्वंकर्म्मन्हविषा । वावृधानःस्वयंय्यंजस्वपृथिवीमुतद्याम् ॥ मु
ह्यन्त्वन्न्येऽअभितं÷सुपत्न्काऽइहास्म्माकंम्मघवासूरिरस्तु ॥ २२ ॥
वाचस्पतिम् ॥ वाचस्पतिंविश्वकंर्म्माणमूतयेमनोजुवंवाजेऽअ
द्याहुवेम ॥ सनोविश्वानिहवंनानिजोषद्विश्वशंम्भूरवसेसाधुकर्म्मा
॥ २३ ॥ विश्वंकर्म्मन्हविषा । वर्द्धनेनत्रातारमिन्द्रमकृणोरवध्य
म् ॥ तस्म्मैविशःसमनमन्तपूर्वीरयमुग्ग्रोविहव्योयथासंत् ॥२४॥
[९] चक्षुंषःपिता । मनंसाहिधीरोघृतमैनेऽअजनन्नम्म्नंमाने ॥ य

देदन्ताऽअदंहहन्तपूर्व्वऽआदिद्द्यावांपृथिवीऽअंप्प्रथेताम् ॥ २५ ॥
विश्वकंम्मांविमंनाः ॥ विश्वकंम्मांविमंनाऽआद्विहांयाधाताविंधा
तापंरमोतसुन्दृक् ॥ तेषांमिष्टानिसामिषामंदन्तियत्रांसप्तऽऋषी
न्पर ऽएकमाहुः ॥ २६ ॥ योनंः । पिताजंनितायोविंधाताधामां
निवेदुभुवंनानिविश्वां॥योदेवानांन्नामधाऽएकंऽएवतᳬसंम्प्रश्न्नम्भु
वंनायन्त्यन्न्या ॥ २७॥ तऽआयंजन्तद्रविंणᳬसमंस्म्माऽऋषंयःपू
र्वेजरितारोनभूना ॥ असूर्त्तेसूर्त्तेरजंसिनिषत्तेयेभूतानिंसमकृण्णव

न्निमानि ॥ २८ ॥ परोदिवा । परऽएनापृथिव्यापरोदेवेभिरसुरैर्य्य
दस्ति ॥ कꣳस्विद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमपश्यन्तपूर्वे
॥ २९ ॥ तमित् ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपोयत्रदेवाःसमगच्छ
न्तविश्वे ॥ अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुवना
नितस्थुः ॥ ३० ॥ नतम् ॥ नतंविदाथयऽइमाजजानान्यद्युष्मा
कमन्तरम्बभूव ॥ नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थशासश्च
रन्ति ॥ ३१ ॥ विश्वकर्म्माहि ॥ विश्वकर्म्माह्यजनिष्टदेवऽआदिद्गन्ध

वोऽअंभवद्धितीयं॑ ॥ तृतीयं॑पिताजनितौषधीनामुपाङ्गर्भंव्यद
धात्पुरुत्रा ॥ ३२ ॥ [ ८ ] आशुःशिशानः ॥ आशुःशिशानोवृष
भोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएक
वीरःशतꣳसेनाऽअजयत्साकमिन्द्रः॑ ॥ ३३ ॥ सङ्क्रन्दनेनानिमि
षेण ॥ जिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयत
तत्सहध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥ ३४ ॥ सऽइषुहस्तैः ॥ सऽइ
षुहस्तैःसनिषङ्गिभिर्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्टजि

त्सोमपाबाहुशर्द्ध्युग्ग्रधन्वाप्प्रतिहिताभिरस्ता ॥ ३५ ॥ बृहस्प्पते
परि । दीयारथेनरक्षोहामित्राँ२ऽअपबाधमानः ॥ प्प्रभञ्जन्त्सेनाः
प्प्रमृणोयुधाजयन्नस्म्माकमेद्ध्यविताराथानाम् ॥ ३६ ॥ बलविज्ञाय
स्त्थविरः ॥ बलविज्ञायस्त्थविरः प्प्रवीरः सहस्वान्वाजीसहमानऽउ
ग्ग्रः ॥ अभिवीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित्
॥३७ ॥ गोत्रभिदङ्गोविदम् ॥ गोत्रभिदङ्गोविदंवज्ज्रबाहुञ्जयन्तम
ज्ज्मप्प्रमृणन्तमोजसा ॥ इमꣳसजाताऽअनुवीरयद्ध्वमिन्द्रꣳसखा

योऽअनुसꣳरभध्वम् ॥ ३८ ॥ अभिगोत्राणि ॥ अभिगोत्राणिसहं
सागाहमानोदयोवीरश्शतमन्युरिन्द्रः ॥ दुश्च्यवनःपृतनाषाडयु
द्ध्योस्माकꣳसेनाऽअवतुप्प्रयुत्सु ॥ ३९ ॥ इन्द्रऽआसाम् ॥ इन्द्र
ऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतुसोमः ॥ देवसेनानाम
भिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥४०॥ इन्द्रस्यवृष्णः।
इन्द्रस्यवृष्ष्णोवरुणस्यराज्ञऽआदित्यानाम्मरुताꣳशर्द्धऽउग्ग्रम् ॥
महामनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ ४१ ॥

उद्धर्षय । मघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मनाᳫँसि ॥ उद्वृ
त्रहन्वाजिनांवाजिनान्युद्रथानाञ्जयतांयन्तुघोषाः ॥ ४२ ॥ अ
स्म्माकमिन्द्रः । समृतेषुध्वजेष्ष्वस्म्माकंयाऽइषवस्ताजयन्तु ॥
अस्म्माकंवीराऽउत्तरेभवन्त्वस्म्माँ२ऽउदेवाऽअवताहवेषु ॥ ४३ ॥
अमीषांञ्चित्तम् ॥ अमीषांञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्प्वे
परेहि ॥ अभिप्प्रेहिनिर्द्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम्
॥ ४४ ॥ अवसृष्टापरा । पतशरव्येब्रह्मसᳫँशिते ॥ गच्छामित्रान्प्प्र

पंद्यस्त्वमामीषाङ्कञ्चनोच्छिषहं ॥ ४५ ॥ प्रेतं ॥ प्रेताजयतानरऽइन्द्रो
वःशर्म्मयच्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥ ४६ ॥
असौया । सेनामरुतःपरेषामभ्यैतिनओजसास्पर्द्धमाना ॥ ताङ्गू
हततमसापव्रतेनयथामीषांअन्योऽअन्यन्नजानन् ॥ ४७ ॥ यत्रबा
णाः । सम्पतन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृहस्पतिरदि
तिःशर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु ॥ ४८ ॥ मर्म्माणिते ॥ म
र्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उ

रोब्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ४९ ॥ [ १७ ]
उदेनम् ॥ उदेनमुत्तरान्नयाग्ग्नेघृतेनाहुत ॥ रायस्प्पोषेणसꣳसृज
प्प्रजयाचबहुङ्कृधि ॥ ५० ॥ शतम् ॥ १०० ॥ इन्द्रेमम् ॥ इन्द्रे
मम्प्रतरान्नयसजातानामसद्वशी ॥ समैनंव्वर्च्चसासृजदेवानाम्भाग
दाऽअसत् ॥ ५१ ॥ यस्यकुम्मः ॥ यस्यकुम्मोगृहेहविस्तमग्ग्नेवर्द्ध
यात्वम् ॥ तस्म्मैदेवाऽअधिब्ब्रवन्नयञ्चब्ब्रह्मणस्प्पतिः ॥ ५२ ॥ उदु
त्वा॥उदुत्वाविश्श्वेदेवाऽअग्ग्नेभरन्तुचित्तिभिः॥सनोभवशिवस्त्वꣳ

सुप्रतीकोविभावसुः ॥ ५३ ॥ पञ्चदिशः ॥ पञ्चदिशोदैवीर्यज्ञमव
न्तुदेवीरपामतिन्दुर्म्मतिम्बाधमानाः ॥ रायस्पोषेयज्ञपतिमाभज
न्तीरायस्पोषेऽअधियज्ञोऽअस्थात् ॥ ५४ ॥ समिद्धेऽअग्नौ ॥ समि
द्धेऽअग्नावधिमामहानऽउक्थपत्रऽईड्योगृभीतः ॥ तप्तङ्घर्म्मम्परि
गृह्यायजन्तोर्जायद्यज्ञमयजन्तदेवाः ॥ ५५ ॥ दैव्यायधर्त्रे ॥ जोष्ट्रे
देवश्रीः श्रीमनाः शतपयाः ॥ परिगृह्यदेवायज्ञमायन्देवादेवेभ्यो
ऽअध्वर्य्यन्तोऽअस्थुः ॥ ५६ ॥ वीतꣳहविः । शमितꣳशमितायजध्यै

तुरीयौंयज्ञोयत्रहुव्यमेति॥ततोंव्वाकाऽआशिषोंनोजुषन्ताम्॥५७॥
सूर्य्यरश्मिर्हरिकेशःपुरस्तांत्सविताज्ज्योतिरुदंयाँ२अजंस्रम्॥तस्यं
पूषाप्प्रसुवेयांतिव्विद्वान्त्सम्पश्यन्विश्वाभुवंनानिगोपाः ॥ ५८ ॥
विमानंऽएषः ॥ व्विमानंऽएषदिवोमध्यंऽआस्तऽआपप्रिवान्रोदंसी
ऽअन्तरिक्षम्॥सव्विश्वाचीरभिचंष्टेघृताचीरन्तरापूर्व्वमपरञ्चकेतुम्॥
॥ ५९ ॥ उक्षासंमुद्रः ॥ उक्षासंमुद्रोऽअंरुणःसुपर्ण्णःपूर्व्वस्ययोनिं
म्पितुराविवेश ॥ मध्येदिवोनिहितःपृश्निरश्म्माव्विचंक्क्रमेरजस

स्स्पात्यन्तौ ॥ ६० ॥ इन्द्रंविश्वाः६ ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्र
व्यंचसङ्गिरं ÷ ॥ रथीतंम६ रथीनांव्वाजानाꣳसत्पतिम्पतिम् ॥ ६१ ॥
देवहूर्यज्ञ६ ॥ देवहूर्यज्ञऽआचंवक्षत्सुम्नहूर्य्यज्ञऽआचंवक्षत् ॥ यक्ष
दग्निर्देवोदेवाँ२आचंवक्षत् ॥ ६२ ॥ वाजंस्यमा । प्प्रसवऽउंद्ग्राभेणो
दंग्ग्रभीत् ॥ अधांसपत्नांनिन्द्रोमेनिग्ग्राभेणाधंराँ२अकः६ ॥ ६३ ॥
उद्ग्राभञ्च ॥ निग्ग्राभञ्चब्रह्मदेवाऽअवीवृधन् ॥ अधांसपत्नांनिन्द्रा
ग्नीमेविषूचीनान्व्यस्यताम् ॥ ६४ ॥ [ १५ ] क्रमंध्वमग्निना ॥ क्रमं

ह्मग्निनानाकसुकस्य॒हस्तेषुबिभ्रतः ॥ दिवस्पृष्ठᳪस्वर्गत्वामि
श्रादेवेभिराह्म ॥ ६५ ॥ प्राचीमनु । प्रदिशम्प्रेहिविद्वानग्नेरग्नेपुरोऽ
अग्निर्भवेह ॥ विश्वाऽआशादीद्यानोविभाह्यूर्जन्नोधेहिद्विपदेच
तुष्पदे ॥ ६६ ॥ पृथिव्याऽअहम् ॥ पृथिव्याऽअहमुदन्तरिक्षमारु
हमन्तरिक्षाद्दिवमारुहम् ॥ दिवोनाकस्यपृष्ठात्स्वर्ज्योतिरगामहम्
॥ ६७ ॥ स्वर्यन्तः ॥ स्वर्यन्तोनापेक्षन्तऽआद्याᳪरोहन्तिरोद
सी ॥ यज्ञंयेविश्वतोधारᳪसुविद्वाᳪसोवितेनिरे ॥ ६८ ॥ अग्नेप्र ॥

अग्नेप्प्रेहिंप्प्रथमोदेवयताञ्चक्षुर्देवानांमुतमर्त्त्यानाम् ॥ इयंक्षमाणा
भृगुभिःसजोषाःस्वर्य्यन्तुयजमानाःस्वस्ति ॥ ६९ ॥ नक्तोषासा ॥
नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकᳪसमीची ॥ द्यावाक्षा
मारुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः ॥ ७० ॥ अ
ग्नेसहस्राक्ष । शतमूर्द्धञ्छतन्तेप्प्राणाःसहस्रंव्यानाः ॥ त्वᳪसाहस्र
स्यरायऽईशिषेतस्म्मैतेविधेमवाजायस्वाहा ॥ ७१ ॥ सुपर्णोसिगरु
त्त्मान्पृष्ठेपृथिव्याःसीद ॥ भासान्तरिक्षमापृणज्ज्योतिषादिवमुत्त

भानुतेजसादिशऽउद्दृꣳह ॥ ७२ ॥ आजुह्वानꣳसुप्रतीकꣳ । पुरस्ता
दग्नेस्वंय्योनिमासीदसाधुया ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मि
न्विश्वेदेवायजमानश्चसीदत ॥ ७३ ॥ ताꣳसवितुः ॥ ताꣳसवितु
र्व्वरेण्यस्यचित्रामाहंव्वृणेसुमतिंविश्वजन्याम् ॥ यामस्यकण्वोऽअदु
हत्प्रपीनाꣳसहस्रधाराम्पयसामहीङ्गाम् ॥ ७४ ॥ विधेमते । परमे
जन्मन्नग्नेविधेमस्तोमैरवरेसधस्थे ॥ यस्माद्योनेरुदारिथायजेतम्प्र
त्वेहवीꣳषिजुहुरेसमिद्धे ॥ ७५ ॥ प्रेद्धोऽअग्ने ॥ प्रेद्धोऽअग्नेदीदि

ह्रिपुरोनोजंस्त्वयासुम्म्यायविष्ठ ॥ त्वाᳬशश्वन्तऽउपयन्तिवाजाः
॥ ७६ ॥ अग्नेतम् ॥ अग्नेतमुद्याश्वन्नस्तोमैःक्रतुन्नभुद्रᳬहृदिस्पृ
शम् ॥ ऋध्यामातऽओहैः ॥ ७७ ॥ चित्तिञ्जुहोमि ॥ चित्तिञ्जुहोमि
मनसाघृतेनयथादेवाऽइहागमन्वीतिहोत्राऽऋतावृधः ॥ पत्येवि
श्वस्यभूमनोजुहोमिविश्वकर्म्मणेविश्वाहादाभ्यᳬहुविः ॥ ७८ ॥
सप्तते । ऽअग्नेसमिधःसुप्तजिह्वाःसुप्तऽऋषयःसुप्तधामप्रिया
णि।सुप्तहोत्राःसप्तधात्वायजन्तिसुप्तयोनीरापृणस्वाघृतेनस्वाहा

॥ ७९ ॥ [ १५ ] शुक्रज्ज्योतिश्च । चित्रज्ज्योतिश्चसुत्यज्ज्योतिश्च
ज्योतिष्म्माँश्च ॥ शुक्रश्चऽऋतपाश्चात्यꣳहाः ॥ ८० ॥ ईदृङ् ॥ ईदृ
ङ्ङान्याहदृङ्सदृङ्प्रतिसदृङ् ॥ मितश्चसम्मितश्चसभराः ॥ ८१ ॥
ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्त्ताचविधारयः ॥ ८२ ॥
ऋतजिच्च । सत्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअमि
त्रश्चगणः ॥८३॥ ईदृक्षासऽएतादृक्षासः ॥ ईदृक्षासऽएतादृक्षासऽ
ऊषुणःसदृक्षासःप्प्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽ

अध्वसभंरसोमरुतोयज्ञेऽअस्म्मिन् ॥ ८४ ॥ स्वतवाँश्च ॥ प्रघासीचं
सान्तपनश्चगृहमेधीचं ॥ क्रीडीचंशाकीचोज्जेषी ॥ ८५ ॥ इन्द्रन्दै
वीः ॥ इन्द्रन्दैवीर्व्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्व्विशोम
रुतोनुवर्त्मानोभवन्॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चा
नुवर्त्मानोभवन्तु ॥ ८६ ॥ [७] इमᳬंस्तनम् ॥ इमᳬंस्तनमूर्ज्ज
स्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्संजुषस्वमधुमन्तमर्व्व
न्त्समुद्रियᳬंसदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षे । घृतमस्ययोनि

र्घृतेश्श्रितोघृतम्वस्यधाम ॥ अनुष्ष्वधमावहमादयस्स्वस्वाहाकृतंवृ
षभवक्षिहव्यम् ॥ ८८ ॥ समुद्रादूर्म्मिः ॥ समुद्रादूर्म्मिर्म्मधुमाँ२
उदारदुपाꣳशुनासमम्मृतत्वमानट् ॥ घृतस्यनामगुह्यंय्यदस्तिजि
ह्वादेवानाममृतस्यनाभिः ॥ ८९ ॥ वयन्नाम ॥ वयन्नामप्प्रब्रवामा
घृतस्यास्मिन्न्यज्ञेधारयामानमोभिः ॥ उपब्रह्माश्शृणवच्छस्यमा
नञ्चतुःश्शृङ्गोवमीद्गौरऽएतत् ॥ ९० ॥ चत्वारिश्शृङ्गा ॥ चत्वारिश्शृ
ङ्गात्रयोऽअस्यपादाद्द्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभो

रौरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ९१ ॥ त्रिधाहितम् ॥ त्रिधा
हितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकᳬ
सूर्य्यऽएकञ्जजानवेनादेकᳪस्वधयानिष्टतक्षुः ॥ ९२ ॥ एताऽअ
र्षन्ति ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥
घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥
॥ ९३ ॥ सम्यक्स्रवन्ति । सरितोनधेनाऽअन्तर्हृदामनसापूयमा
नाः॥एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः॥९४॥

सिन्धोरिवप्प्राध्वने ॥ सिन्धोरिवप्प्राध्वनेशूघनासोवातप्प्रमियंपत
यन्तियह्वाः ॥ घृतस्युधाराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मिभिंः
पिन्वमानः ॥ ९५ ॥ अभिप्रवन्त ॥ अभिप्रवन्तुसमनेवयोषाःक
ल्याण्यःस्म्मयमानासोऽअग्निम् ॥ घृतस्युधाराःसमिधोनसन्तु
ताजुषाणोहर्य्यतिजातवेदाः ॥ ९६ ॥ कन्याऽइववहतुम् ॥ कन्याऽ
इववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमःसु
यतेयत्रयज्ञोघृतस्युधाराऽअभितत्पवन्ते ॥ ९७ ॥ अभ्यर्षत । सुष्टु

तिङ्ख्यर्मा जिमुस्मासुंभुद्राद्रविंणानिधत्त ॥ इमंयुज्ञन्नंयतदेवर्ता
नोघृतस्युधारामधुंमत्पवन्ते ॥ ९८ ॥ धार्मन्ते ॥ धार्मन्तेविश्वम्भु
वनमधिश्रितमुन्तःसंमुद्रेहृद्युन्तरायुषि ॥ अपामनीकेसमिथेयऽ
आभृतस्तमश्यामुमधुंमन्तन्तऽऊर्म्मिम् ॥ ९९ ॥ [ १३ ] इति
श्रीवाजसनेयसंहितायांसप्तदशोऽध्यायः ॥ १७ ॥ श्रीवेदपुरुषाय
नमः ॥ अनुवाकसूत्रम् ॥ वाजःसत्यमूर्क्चतुष्काअश्मान्निस्त्रिका
वढ्शुःपंचैकाचतस्रोवाजायद्वेवाजस्यत्वष्टाघृतापाट्त्रयोदशाग्निं

युनज्मिसप्तयदाकूताद्धार्त्रहत्यायदशकौत्रयोदशसप्तसप्ततिः॥हरिः
ॐ वाजश्च । मेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्च
मेस्वरश्चमेश्लोकश्चमेश्रावश्चमेश्रुतिश्चमेज्योतिश्चमेस्वश्चमेयज्ञे
नकल्पन्ताम् ॥ १ ॥ प्राणश्च । मेपानश्चमेव्यानश्चमेसुश्चमेचित्तञ्च
मऽआधीतञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमेदक्षश्चमेबलञ्च
मेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्च । मेसहश्चमऽआत्माचमेत
नूश्चमेशर्म्मचमेवर्म्मचमेङ्गानिचमेस्थीनिचमेपरूंषिचमेशरी

राणिचम ऽआयुंश्चमेजुराचंमेयुज्ञेनंकल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यंञ्च ।
मऽआधिपत्त्यञ्चमेमुन्न्युश्चमेभामंश्चमेमंश्चमेम्भंश्चमेजेमाचंमेम
हिमाचंमेवरिमाचंमेप्प्रथिमाचंमेवर्षिमाचंमेद्राघिमाचंमेवृद्धञ्चंमे
वृद्धिंश्चमेयुज्ञेनंकल्पन्ताम् ॥ ४ ॥ सुत्त्यञ्च । मेश्रुद्धाचंमेजगंच्चमे
धनंञ्चमेविश्वंञ्चमेमहंश्चमेक्रीडाचंमेमोदंश्चमेजातञ्चमेजनिष्यमा
णञ्चमेसुक्तञ्चमेसुकृतञ्चमेयुज्ञेनंकल्पन्ताम् ॥ ५ ॥ ऋतञ्च । मेमृतं
ञ्चमेयुक्ष्मञ्चमेनामयच्चमेजीवातुंश्चमेदीर्घायुत्वञ्चमेनमित्रञ्चमेभं

यच्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेयज्ञेनकल्पन्ताम्
॥ ६ ॥ यन्ताचं । मेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वञ्चमेमहश्चमेसं
विच्चमेज्ञात्रञ्चमेसूश्चमेप्रसूश्चमेसीरञ्चमेलयश्चमेयज्ञेनकल्पन्ताम्
॥ ७ ॥ शञ्च । मेमयश्चमेप्रियञ्चमेनुकामश्चमेकामश्चमेसौमनस
श्चमेभगश्चमेद्रविणञ्चमेभद्रञ्चमेश्रेयश्चमेवसीयश्चमेयशश्चमेयज्ञे
नकल्पन्ताम् ॥ ८ ॥ [ ७ ] ऊर्क्क । मेसूनृताचमेपयश्चमेरसश्चमेघृ
तञ्चमेमधुचमेसग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽ

औद्भिद्यञ्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्च । मेरायश्चमेपुष्टञ्चमे
पुष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमे
न्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम् ॥ १० ॥ वित्तञ्च । मेवेद्यञ्चमेभूत
ञ्चमेभविष्यच्चमेसुगञ्चमेसुपथ्यञ्चमऽऋद्धञ्चम ऽऋद्धिश्चमेक्लृप्त
ञ्चमेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम् ॥ ११ ॥ व्रीह
यश्च । मेयवाश्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्ग
वश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमे

यज्ञेनंकल्पन्ताम् ॥१२॥ [ ४ ] अश्म्मांच । मेमृत्तिकाचमेगिरयं
श्चमेपर्वता श्चमेसिकता श्चमेवनस्पतंय श्चमेहिरंण्यञ्चमेयं श्चमेश्यां
मञ्चमेलोहञ्चमेसीसंञ्चमेत्रपुंचमेयज्ञेनंकल्पन्ताम् ॥ १३ ॥ अग्नि
श्च । मऽआपं श्चमेवीरुधं श्चमऽओषंधय श्चमेकृष्टपच्याश्चमेकृष्टपच्या
श्चमेग्राम्म्या श्चमेपशवंऽआरण्ण्या श्चमेवित्तञ्चमेवित्ति श्चमेभूतञ्च
मेभूतिं श्चमेयज्ञेनंकल्पन्ताम् ॥ १४ ॥ वसुंच । मेवसति श्चमेकर्म्मंच
मेशक्तिं श्चमेर्थं श्चमऽएमं श्चमऽइत्याचंमेगतिं श्चमेयज्ञेनंकल्पन्ताम्

॥ १५ ॥ [ ३ ] अग्निश्च मे । मऽइन्द्रश्च मे सोमश्च मऽइन्द्रश्च मे सविता
च मऽइन्द्रश्च मे सरस्वती च मऽइन्द्रश्च मे पूषा च मऽइन्द्रश्च मे बृहस्प
तिश्च मऽइन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १६ ॥ मित्रश्च मे । मऽइन्द्रश्च
मे वरुणश्च म इन्द्रश्च मे धाता च मऽइन्द्रश्च मे त्वष्टा च मऽइन्द्रश्च मे
मरुतश्च मऽइन्द्रश्च मे विश्वे च मे देवाऽइन्द्रश्च मे यज्ञेन कल्पन्ताम्
॥ १७ ॥ पृथिवी च मे । मऽइन्द्रश्च मेऽन्तरिक्षञ्च मऽइन्द्रश्च मे द्यौश्च मऽइ
न्द्रश्च मे समाश्च मइन्द्रश्च मे नक्षत्राणि च मऽइन्द्रश्च मे दिशश्च मऽइन्द्र

श्चमेयज्ञेनकल्पन्ताम् ॥ १८ ॥ [ २ ] अꣳशुश्च । मेरश्मिश्चमेदा
ऽभ्यश्चमेधिपतिश्चमउपाꣳशुश्चमेन्तर्यामश्चमऽऐन्द्रवायवश्चमे
मैत्रावरुणश्चमऽआश्विनश्चमेप्रतिप्रस्थानश्चमेशुक्रश्चमेमन्थीचं
मेयज्ञेनकल्पन्ताम् ॥ १९ ॥ आग्रयणश्च । मेवैश्वदेवश्चमेध्रुवश्चमे
वैश्वानरश्चमऽऐन्द्राग्नश्चमेमहावैश्वदेवश्चमेमरुत्वतीयाश्चमेनि
ष्केवल्यश्चमेसावित्रश्चमेसारस्वतश्चमेपात्नीवतश्चमेहारियोजन
श्चमेयज्ञेनकल्पन्ताम् ॥२०॥ स्रुचश्च ॥ मेचमसाश्चमेवायव्यानिच

मेद्द्रोणकलशश्चमेग्ग्रावाणश्चमेधिषवणेचमेपूतभृच्चमेऽआधवनीय
श्चमेवेदिश्चमेबर्हिश्चमेऽवभृथश्चमेस्वगाकारश्चमेयज्ञेनकल्पन्ताम्
॥२१॥ अग्निश्च। मेघर्म्मश्चमेर्कश्चमेसूर्य्यश्चमेप्प्राणश्चमेश्वमेधश्च
मेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेङ्गुलयःशक्करयोदिशश्चमे
यज्ञेनकल्पन्ताम् ॥२२॥ व्रतञ्च। मऽऋतवश्चमेतपश्चमेसंवत्सरश्च
मेहोरात्रेऽऊर्वष्ठीवेबृहद्रथन्तरेचमेयज्ञेनकल्पन्ताम् ॥ २३ ॥ [५]
एकाच। मेतिस्रश्चमेतिस्रश्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमेन

वंचमेनवंचमऽएकादशचमऽ एकादशचमेत्रयोदश
चमेपञ्चदशचमेपञ्चदशचमेसप्तदशचमेसप्तदशचमेनवदशचमे
नवदशचमऽ एकविꣳशतिश्चमऽएकविꣳशतिश्चमेत्रयोविꣳशतिश्च
मेत्रयोविꣳशतिश्चमेपञ्चविꣳशतिश्चमेपञ्चविꣳशतिश्चमेसप्तविꣳ
शतिश्चमेसप्तविꣳशतिश्चमेनवविꣳशतिश्चमेनवविꣳशतिश्चमऽ
एकत्रिꣳशच्चमऽएकत्रिꣳशच्चमेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम्
॥ २४ ॥ चतस्रश्च । मेष्टौचमेष्टौचमेद्वादशचमेद्वादशचमेषोडशच

मेषोडशचमेविꣳशतिश्चमेविꣳशतिश्चमेचतुर्विं
ꣳशतिश्चमेष्टाविंꣳशतिश्चमेष्टाविंꣳशतिश्चमेद्वात्रिंꣳशच्चमेद्वात्रिं
ꣳशच्चमेषट्त्रिंꣳशच्चमेषट्त्रिंꣳशच्चमेचत्वारिꣳशच्चंमेचत्वारिꣳशच्चंमे
चतुश्चत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेष्टाचंत्वारिꣳशच्चमेयज्ञे
नेकल्पन्ताम् ॥ २५ ॥ त्र्यविश्च । मेत्र्यवीचंमेदित्यवाट्चमेदित्यौ
हीचंमेपञ्चाविश्चमेपञ्चावीचंमेत्रिवत्सश्चमेत्रिवत्साचंमेतुर्य्यवाट्चमे
तुर्य्यौहीचंमेयज्ञेनेकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्च । मेपष्ठौहीचंमऽ

उक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञेनक
ल्पन्ताम् ॥ २७ ॥ ] ४ ] वाजायस्वाहा । प्प्रसवायस्वाहापिजाय
स्वाहाक्क्रतवेस्वाहावसवेस्वाहाहर्प्पतयेस्वाहान्हेमुग्ग्धायस्वाहामु
ग्ग्धायवैनꣳशिनायस्वाहाविनꣳशिनऽआन्त्यायनायस्वाहान्त्या
यभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्प्रजापतयेस्वा
हा ॥ इयन्तेराण्णिम्मत्राययन्तासियमनऽऊर्ज्जेत्वावृष्ट्यैत्वाप्प्रजाना
न्त्वाधिपत्याय ॥२८॥ आयुर्य्यज्ञेनकल्पताम्प्राणोयज्ञेनकल्पता

ञ्चक्षुर्य्यज्ञेनकल्पताᳪंश्रोत्रंयज्ञेनकल्पतांव्वाग्यज्ञेनकल्पता
म्मनोयज्ञेनकल्पतामात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्प
ताञ्ज्योतिर्य्यज्ञेनकल्पन्ताᳪंस्वर्य्यज्ञेनकल्पताम्पृष्ठंयज्ञेनक
ल्पतांयज्ञोयज्ञेनकल्पताम् ॥ स्तोमश्चयजुश्चऋक्चसामचबृहच्च
रथन्तरञ्च ॥ स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापतेःप्प्रजाऽअभू
मव्वेट्स्वाहा ॥ २९ ॥ [ २ ] व्वाजस्यनु । प्प्रसवेमातरम्महीमदितिन्ना
मव्वचसाकरामहे ॥ यस्यामिदव्विश्वम्भुवनमाविवेशतस्यान्नोदेवःस

वितायमैसाविषत् ॥ ३० ॥ विश्वेअद्य । मरुतोविश्वऽऊतीविश्वेभ
वन्त्वग्नयःसमिद्धाः ॥ विश्वेनोदेवाऽअवसागमन्तुविश्वमस्तुद्रविं
णंवाजोऽअस्मे ॥ ३१ ॥ वाजोनः । सप्तप्रदिशश्चतंस्रोवापराव
तं÷ ॥ वाजोनोविश्वैर्देवैर्द्धनंसाताविहावतु ॥ ३२॥ वाजोनो ॥ वा
जोनोऽअद्यप्रसुवातिदानंवाजोदेवाँ२ऽऋतुभिं÷कल्पयाति ॥ वा
जोहिमासर्वंवीरञ्जजानविश्वाऽआशावाजंपतिर्ज्जयेयम् ॥ ३३ ॥
वाजं÷पुरस्तात् ॥ वाजं÷पुरस्तादुतमंध्यतोनोवाजोदेवान्हविषावर्द्ध

श्चक्षुर्य्यज्ञेनकल्पता॑ᳬंश्श्रोत्रंय्यज्ञेनकल्पतांव्वाग्ग्यज्ञेनकल्पता
म्मनोयज्ञेनकल्पतामात्माय्यज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्प
ताञ्ज्योतिर्य्यज्ञेनकल्पन्ताᳬंस्वर्य्यज्ञेनकल्पताम्पृष्ठंय्यज्ञेनक
ल्पतांय्यज्ञोयज्ञेनकल्पताम् ॥ स्तोमश्चयजुश्चऋक्चसामचबृहच्च
रथन्तरञ्च ॥ स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापतेःप्प्रजाऽअभू
मव्वेट्स्वाहा ॥ २९ ॥ [ २ ] व्वाजस्यनु । प्प्रसवेमातरम्महीमदितिन्ना
मव्वचसाकरामहे ॥ यस्यामिदंव्विश्वम्भुवनमाविवेशतस्यान्नोदेवःस

वितांधर्मसाविषत् ॥ ३० ॥ विश्वेअद्य । मुरुतोविश्व्वऽऊतीविश्वेभ
वन्त्वग्नयुःसमिद्धाः ॥ विश्वेनोदेवाऽअवसागमन्तुविश्वमस्तुद्रवि
णंवाजोऽअस्मे ॥ ३१ ॥ वाजोनः । सप्तप्रदिशुश्चतस्रोवापरावं
तः ॥ वाजोनोविश्वैर्देवैर्धनसाताविहावंतु ॥ ३२॥ वाजोनो ॥ वा
जोनोऽअद्यप्रसुवातिदानंवाजोदेवाँ२ ऽऋतुभिः कल्पयाति॥ वा
जोहिमासर्व्ववीरञ्जजानविश्वाऽआशावाजंपतिर्जयेयम् ॥ ३३ ॥
वाजः पुरस्तात् ॥ वाजःपुरस्तादुतमध्यतोनोवाजोदेवान्हविषावर्द्ध

याति ॥ वाजोहिमासर्वंवीरञ्चकारसर्व्वाऽआशावाजंपतिर्भवेयम्
॥ ३४ ॥ सम्मा । सृजामिपयंसापृथिव्याꣳसम्मासृजाम्म्यद्भिरोषं
धीभिः ॥ सोहंवाजꣳसनेयमग्ने ॥ ३५ ॥ पयः पृथिव्याम् ॥ पयः
पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्प्र
दिशः सन्तुमह्यम् ॥ ३६ ॥ देवस्यत्वा । सवितुश्प्प्रसवेश्विनोर्ब्बाहु
भ्यांम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रेणाग्नेश्साम्
म्राज्येनाभिषिञ्चामि ॥ ३७॥ [ ८ ] ऋताषाडृतधामा ॥ ऋताषा

ऋतषाड्तधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ॥ सन्न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ३८ ॥ संहितो विश्वसामा ॥ सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ॥ सन्न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ३९ ॥ सुषुम्णः सूर्यरश्मिः ॥ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ॥ सन्न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ४० ॥ इषिरो विश्वव्यचा ॥ इषिरो विश्वव्यचा वा

तौगन्धर्वस्तस्यापोऽअप्सरसऽऊर्जोनाम । सनऽइदम्ब्रह्मक्षत्रम्पा
तुतस्मैस्वाहावाट्ताभ्यःस्वाहा ॥४१॥ भुज्युःसुपर्ण्णः ॥ भुज्युःसु
पर्ण्णोयज्ञोगन्धर्वस्तस्यदक्षिणाऽअप्सरसस्तवानाम ॥ सनऽइदम्ब्र
ह्मक्षत्रम्पातुतस्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ४२ ॥ प्रजापतिर्विश्व
कर्म्मा । मनोगन्धर्वस्तस्यऽऋक्सामान्यप्सरसऽएष्टयोनाम ॥ सनं
ऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ४३ ॥ सनः ॥
सनोभुवनस्यपतेप्रजापतेयस्यतऽउपरिगृहायस्यवेह ॥ अस्मैब्रह्म

णेस्म्मैक्षत्त्रायमहिशर्म्मयच्छस्वाहा ॥ ४४ ॥ समुद्रोसि ॥ समुद्रो
सिनभंस्वानार्द्रदानुःशम्भूर्म्मयोभूरभिमावाहिस्वाहामारुतोसिम
रुतांङ्गणः शम्भूर्म्मयोभूरभिमावाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भू
र्म्मयोभूरभिमावाहिस्वाहा ॥ ४५ ॥ यास्ते । ऽअग्नेसूर्य्येरुचोदि
वमातन्न्वन्तिरश्श्मिभिः ॥ ताभिर्न्नोऽअद्यसर्वाभिरुचेजनायनस्कृ
धि ॥ ४६ ॥ यावः ॥ यावोदेवाःसूर्य्येरुचोगोष्वश्श्वेषुयारुचः ॥
इन्द्राग्नीताभिःसर्वाभीरुचन्नोधत्तबृहस्पते ॥ ४७ ॥ रुचन्नः ॥

रुचन्नोधेहिब्राह्मणेषुरुचꣳराजसुनस्कृधि ॥ रुचंविश्येषुशूद्रेषुमयि
धेहिरुचारुचम् ॥४८॥ तत्त्वा । यामिब्रह्मणावन्दमानस्तदाशास्ते
यजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआ
युःप्रमोषीः ॥ ४९ ॥ स्वर्ण्ण ॥ स्वर्ण्णघर्म्मःस्वाहास्वर्ण्णार्क्कःस्वाहा
स्वर्ण्णशुक्रःस्वाहास्वर्ण्णज्ज्योतिःस्वाहास्वर्ण्णसूर्य्यःस्वाहा ॥५०॥
[१३] अग्निंय्युनज्मि ॥ अग्निंय्युनज्मिशवसाघृतेनदिव्यꣳसु
पर्ण्णंवयसाबृहन्तम् ॥ तेनवयङ्गमेमब्रध्नस्यविष्टपꣳस्वोरुहाणाऽअ

धिनाकंमुत्तमम् ॥ ५१ ॥ शतम् ॥ १००० ॥ इमौतें । पक्षावजरौप
तत्रिणौयाब्भ्याᳪरक्षाᳪस्यपहᳪस्यंग्ने ॥ ताब्भ्यांम्पतेमसुक्तांसु
लोकंयत्रऽऋषंयोजग्मुःप्रंथमजाःपुंराणाः ॥ ५२ ॥ इन्दुर्दक्षं÷ ।
श्येनऽऋतावाहिरंण्यपक्षःशकुनोभुंरण्युः ॥ महान्त्सधस्थेध्रुवऽ
आनिषंत्तोऽनमंस्तेऽअस्तुमामांहिᳪसीः ॥ ५३ ॥ दिवोमूर्द्धा । सिपृ
थिव्यानाभिरूर्ग्गपामोषंधीनाम् ॥ विश्वायुःशर्म्मंसप्प्रथानमंस्पथे
॥ ५४ ॥ विश्वंस्यमूर्द्धन् ॥ विश्वंस्यमूर्द्धन्नधिंतिष्ठसिश्रितःसंमुद्रेतेह्व

दे॒यमुष्य॒स्वायु॑रपोद॑त्तोदु॒धिम्भि॑न्त ॥ दि॒वस्प॒र्ज्जन्या॑दु॒न्तरि॑क्षात्पृथि॒
व्यास्ततो॑नोवृ॒ष्ट्याव ॥ ५५ ॥ इ॒ष्टोय॒ज्ञः ॥ इ॒ष्टोय॒ज्ञोभृग॑ुराशी॒र्दाव
सु॑भिः ॥ तस्य॑नऽइ॒ष्टस्य॑प्प्रीतस्य॑द्रवि॑णेहाग॑मेः ॥ ५६ ॥ इ॒ष्टोऽअ॒
ग्निः ॥ इ॒ष्टोऽअ॒ग्निराहु॑तःपिप॒र्त्तुनऽइ॒ष्टᳪ॑ह॒विः ॥ स्व॒गेद॒न्दे॒वेभ्यो॒
नम॑ः ॥ ५७ ॥ [ ७ ] यदाकू॑तात् ॥ यदाकू॑तात्सम॑सुस्रो॒द्धृदोवा॒म
न॑सोवा॒सम्भृ॑तञ्चक्षु॑षोवा ॥ तदनु॒प्प्रेत॑सुकृ॒तामु॑लो॒कंयत्र॒ऽऋष॑योज॒
ग्मुःप्प्र॑थम॒जाःपु॑रा॒णाः ॥ ५८ ॥ ए॒तᳪस॑धस्थ॒परि॑तेददा॒मि॒यमा॒व

हाच्छेवधिज्ञातवेदाः॥ अन्वागन्तायज्ञपंतिर्वोऽअत्रतꣳस्म्मंजानी
तपरमेव्योमन् ॥ ५९ ॥ एतज्ञांनाथ । परमेव्योमन्देवाःसधस्त्था
विदरूपमस्य ॥ यदागच्छात्पथिभिर्देवयानैरिष्टापूर्तेकृणवाथाविरं
स्स्मै ॥ ६० ॥ उद्बुध्यस्व ॥ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसꣳ
सृजेथामयञ्च ॥ अस्म्मिन्त्सधस्त्थेऽअध्युत्तरस्म्मिन्विश्वेदेवायजमा
नश्चसीदत ॥ ६१ ॥ येनवहसि । सहस्रंयेनाग्नेसर्ववेदसम् ॥ तेनेमं
यज्ञन्नोनयस्वर्देवेषुगन्तवे ॥ ६२ ॥ प्रस्तरेणपरिधिना । स्रुचावेद्या

चवर्हिषा ॥ ऋचेमंय्यज्ञन्नोनयस्वर्हेंदेवेषुगन्तवे ॥ ६२ ॥ यद्दत्तम् ॥
यद्दत्तंय्यत्परादानंय्यत्पूर्तंय्याश्चदक्षिणाः ॥ तदग्निर्वैश्वकर्म्मणः
स्वर्द्देवेषुन्नोदधत् ॥ ६३ ॥ यत्रधाराः ॥ यत्रधाराऽअनपेतामधोर्घृ
तस्यचयाः ॥ तदग्निर्वैश्वकर्म्मणःस्वर्द्देवेषुन्नोदधत् ॥ ६५ ॥ अग्निर
स्मि ॥ [illegible] ॥ स्मिजन्मनाजातवेदाघृतम्मेचक्षुरमृतम्मऽआसन् ॥
अर्कस्त्रिधातूरजसोविमानोजस्रोघर्म्मोहविरस्मिनाम ॥ ६६ ॥ ऋचो
नाम ॥ ऋचोनामास्मियजूंषिनामास्मिसामानिनामास्मि ॥

येऽअग्नयः पाञ्चजन्याऽअस्याम्पृथिव्यामधि ॥ तेषामसित्वमुत्त

मः प्रनोजीवातवेसुव ॥ ६७ ॥ [ १० ] वार्त्रहत्यायशवसेपृतनाषा

ह्यायच ॥ इन्द्रत्त्वावर्त्तयामसि ॥ ६८ ॥ सुहदानुम्पुरुहूत । क्षियन्तं

महस्तमिन्द्रसम्पिणक्कुणारुम् ॥ अभिवृत्रंवर्द्धमानम्पियारुमपाद

मिन्द्रतवसाजघन्थ ॥ ६९ ॥ विनः ॥ विनऽइन्द्रमृधोजहिनीचाय

च्छपृतन्यतः ॥ योऽअस्माँ२ऽअभिदासत्यधरङ्गमयातमः ॥ ७० ॥

मृगोन । भीमःकुचरोगिरिष्ठाः परावतऽआजगन्थापरस्याः ॥ सृकः

सहुशायंपविमिन्द्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व ॥ ७१ ॥ वैश्वा
नरोनं÷ ॥ वैश्वानरोनऽऊतयऽआप्रयांतुपरावतं÷ ॥ अग्निर्नं÷सुष्टु
तीरुपं ॥ ७२ ॥ पृष्टोदिवि ॥ पृष्टोऽअग्निःपृथिव्यांपृष्टोविश्वाऽओष
धीराविवेश ॥ वैश्वानरःसहसापृष्टोऽअग्निःसनोदिवासरिषस्पातु
नक्तम् ॥ ७३ ॥ अश्यामतम् ॥ अश्यामतङ्कामंमग्नेतवोतीऽअश्या
मंरयिꣳरयिवःसुवीरंम् ॥ अश्यामवाजमभिवाजयंन्तोश्यामद्यु
म्नमंजराजरन्ते ॥ ७४ ॥ वयन्ते । ऽअद्यरंरिमाहिकामंमुत्तानह

॥१७२॥ शसोमोराजाष्टौसीसेनतंत्रᳪषोडशसप्तपंचनवतिः ॥ हरिःॐ स्वा
द्वीन्त्वां । स्वादुनातीव्रान्तीव्रेणामृतामृतेन ॥ मधुमतीम्मधुम
तासृजामिसᳪसोमेन ॥ सोमोस्यश्विभ्यांम्पच्यस्वसरस्वत्यैपच्य
स्वेन्द्रायसुत्राम्णेपच्यस्व ॥ १ ॥ परीतः ॥ परीतोषिञ्चतासुतᳪसो
मोयऽउत्तमᳪहविः ॥ दधन्वायोनर्योऽअप्स्वन्तरासुषावसोमम
द्रिभिः ॥ २ ॥ वायोःपूतः । पवित्रेणप्प्रत्यङ्सोमोऽअतिद्रुतः ॥ ॥१७२॥
इन्द्रस्ययुज्यःसखा ॥ वायोःपूतःपवित्रेणप्प्राङ्सोमोऽअतिद्रुतः ॥

इन्द्रस्ययुज्युःसखा ॥ ३ ॥ पुनातिते । परिस्रुतꣳसोमꣳसूर्य्यस्यदु
हिता ॥ वारेणशश्वतातना ॥ ४ ॥ ब्रह्मक्षत्रम् ॥ ब्रह्मक्षत्रम्पवते
तेजऽइन्द्रियꣳसुरयासोमःसुतऽआसुतोमदाय ॥ शुक्रेणदेवदेव
ताःपिपृग्धिरसेनान्नंयजमानायधेहि ॥ ५ ॥ कुविदङ्ग । यवमन्तो
यवंचिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषाङ्कृणुहिभोजनानियेबर्हि
षोनमउक्तिंयजन्ति ॥ उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यै
त्वेन्द्रायत्वासुत्राम्णऽएषतेयोनिस्तेजसेत्त्वावीर्य्यायत्त्वाबलाय

त्त्वा ॥ ६ ॥ नानाहि । वान्देवहितह्सदस्कृतम्स॑ꣳसृक्षाथाम्परमेव्योम्न् ॥ सुरात्वमसिशुष्म्मिणीसोमऽएषमामाहिꣳसीःस्वांयोनिमाविशन्ती ॥ ७ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याश्विनंतेजः सारस्वतंवीर्य्यमैन्द्रम्बलम् ॥ एषतेयोनिम्मोदायत्त्वानन्दायत्त्वामहसेत्त्वा ॥ ८ ॥ तेजोसि ॥ तेजोसितेजोमयिधेहिवीर्य्यमसिवीर्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजोस्योजोमयिधेहि मन्न्युरसिमन्न्युम्मयिधेहिसहोसिसहोमयिधेहि ॥ ९ ॥ याव्याघ्रम् ॥

साघ्र्याग्घ्रंविषूचिकोभौवृकंञ्चरक्षति ॥ श्येनम्पतत्रिणꣳसिꣳहꣳसे
मम्पात्वꣳहंसः॥ १०॥ यदापिपेष॥ मातरम्पुत्रःप्प्रमुदितोधयन्॥
एतत्तदग्ग्नेअनृणोभवाम्म्यहतौपितरौमया ॥ सम्पृचस्स्थसम्माभ
द्रेणपृङ्क्तविपृचस्स्थविमापाप्मनापृङ्क्त ॥ ११ ॥ [ ११ ] देवायज्ञम् ॥
देवायज्ञमतन्न्वतभेषजम्भिषजाश्श्विना॥ वाचासरस्वतीभिषगिन्द्रा
येन्द्रियाणिदधतः ॥ १२ ॥ दीक्षायैरूपम् ॥ दीक्षायैरूपꣳशष्पा
णिप्प्रायणीयस्यतोक्मानि ॥ क्रयस्यरूपꣳसोमस्यलाजाःसोमा

शवोमधु ॥ १३ ॥ आतिथ्यरूपम्मासरम् ॥ आतिथ्यरूपम्मास
रम्महावीरस्यनग्नहुः ॥ रूपमुपसदामेतात्तिस्रोरात्रीःसुरासुता
॥ १४ ॥ सोमस्यरूपम् ॥ सोमस्यरूपङ्क्रीतस्यपरिस्रुत्परिषिच्यते ॥
अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रꣳसरस्वत्या ॥ १५ ॥ आस
न्दीरूपम् ॥ आसन्दीरूपꣳराजासन्द्यैवेद्यैकुम्भीसुराधानी ॥ अन्त
रऽउत्तरवेद्यारूपङ्कारोत्तरोभिषक् ॥ १६ ॥ वेद्यावेदिः ॥ वेद्यावे
दिःसमाप्यतेबर्हिषाबर्हिरिन्द्रियम् ॥ यूपेनयूपऽआप्यतेप्रणीतो

ऽअग्निरग्निना ॥१७॥ हविर्द्धानंय्यत् ॥ हविर्द्धानंय्यदश्विनाग्नीध्रं
य्यत्सरस्वती ॥ इन्द्रायैन्द्रᳬसदस्कृतम्पत्नीशालङ्गार्हपत्यः ॥१८॥
प्रैषेभिः प्रैषान् ॥ प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीर्य्यज्ञस्य ॥
प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः ॥१९॥ पशुभिः पशून् ॥
पशुभिः पशूनाप्नोतिपुरोडाशैर्हवीᳬष्या ॥ छन्दोभिः सामिधेनी
र्य्याज्याभिर्व्वषट्कारान् ॥ २० ॥ धानाः करम्भः सक्तवः परीवापः
पयोदधि ॥ सोमस्यरूपᳬहविषऽआमिक्षावाजिनम्मधु ॥ २१ ॥

धानानांꣳरूपम् ॥ धानानांꣳरूपङ्कुवलम्परीवापस्यंगोधूमाः ॥ स
क्तूनांꣳरूपम्बदरमुपवाकाःकरम्भस्य ॥ २२ ॥ पयसोरूपम् ॥ पय
सोरूपंय्यद्यवाढुक्त्रोरूपङ्कर्कन्धूनि ॥ सोमस्यरूपंव्वाजिनꣳसौम्म्य
स्यरूपमामिक्षा ॥ २३ ॥ आश्श्रावय ॥ आश्श्रावयेतिस्तोत्रियाः
प्प्रत्याश्श्रावोऽअनुरूपः ॥ यजेतिधाय्यारूपम्प्रगाथायेयजामहाः
॥ २४ ॥ अर्द्धऽऋचैरुक्थानाम् ॥ अर्द्धऽऋचैरुक्थानांꣳरूपम्पदैरा
प्नोतिनिविदः ॥ प्प्रणवैःशस्त्राणांꣳरूपम्पयसासोमऽआप्यते

॥२५॥ अश्विभ्याम्प्रातःसवनम् ॥ अश्विभ्याम्प्रातःसवनमिन्द्रे
णैन्द्रम्माध्यन्दिनम् ॥ वैश्वदेवꣳसरस्वत्यातृतीयमाप्तꣳसवनम्
॥ २६ ॥ वायव्यैर्वायव्यानि ॥ वायव्यैर्वायव्यान्याप्नोतिसतेनद्रो
णकलशम् ॥ कुम्भीभ्यामम्भृणौसुतेस्थालीभिःस्थालीराप्नोति
॥ २७ ॥ यजुर्भिराप्यन्तेग्रहाग्रहैस्तोमाश्चविष्टुतीः ॥ छन्दोभि
रुक्थाशस्त्राणिसाम्नावभृथऽआप्यते॥२८॥इडाभिर्भक्षान्॥इडा
भिर्भक्षानाप्नोतिसूक्तवाकेनाशिषः ॥ शंयुनापत्नीसंयाजान्त्स

मिष्ट्यजुषांसꣳस्थाम् ॥ २९ ॥ व्रतेनदीक्षाम् ॥ व्रतेनदीक्षामाप्नोति
दीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्श्रद्धामाप्नोतिश्श्रद्धयासत्त्यमा
प्यते ॥ ३० ॥ एतावद्रूपम् ॥ एतावद्रूपंय्यज्ञस्ययद्देवैर्ब्रह्मणाकृतम् ॥
तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसुते ॥ ३१ ॥ [२०] सुरावन्तम्बर्हिष
दम् ॥ सुरावन्तम्बर्हिषदꣳसुवीरंय्यज्ञꣳहिन्वन्तिमहिषानमोभिः ॥
दधानाःसोमन्दिविदेवतासुमदेमेन्द्रंय्यजमानाःस्वर्क्काः ॥ ३२ ॥
यस्ते ॥ यस्तेरसःसम्भृतऽओषधीषुसोमस्यशुष्मःसुरयासुतस्य ॥ तेन

जिन्व॒यज॑मानम्मदे॑न॒सर॑स्वतीम॒श्विना॒विन्द्र॑म॒ग्निम् ॥ ३३ ॥ यम॒
श्विना॒ । नमु॑चेरासु॒राद॒धिसर॑स्वत्य॒सु॑नोदि॒न्द्रि॒याय॑ ॥ इ॒मन्तꣳशु॒
क्रम्मधु॑मन्त॒मिन्दु॒ꣳसोम॒ꣳराजा॑नमि॒हभ॑क्षयामि ॥ ३४ ॥ यद॒त्र ॥
यद॒त्ररि॒प्तꣳर॒सिनः॑सु॒तस्य॒यदिन्द्रो॒ऽअपि॑ब॒च्छची॑भिः ॥ अ॒हन्त
द॑स्यु॒मन॑साशि॒वेन॒सोम॒ꣳराजा॑नमि॒हभ॑क्षयामि ॥ ३५ ॥ पि॒तृभ्यः॑
स्वधा॒यिभ्यः॑ । स्व॒धानमः॑पिताम॒हेभ्यः॑स्वधा॒यिभ्यः॑स्व॒धा
नमः॒प्रपि॑ताम॒हेभ्यः॑स्वधा॒यिभ्यः॑स्व॒धानमः॑ ॥ अक्ष॒न्पित॑रोमी

मदन्तपितरोतीतृपन्तपितरःपितरःशुन्धध्वम् ॥ ३६ ॥ पुनन्तु
मापितरःसोम्यासःपुनन्तुमापितामहाःपुनन्तुप्रपितामहाः प
वित्रेणशतायुषा ॥ पुनन्तुमापितामहाःपुनन्तुप्रपितामहाः ॥
पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ३७ ॥ अग्नऽआयूᳬषि ।
पवसऽआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥ ३८ ॥ पुन
न्तुमा । देवजनाःपुनन्तुमनसाधियः । पुनन्तुविश्वाभूतानिजा
तवेदःपुनीहिमा ॥ ३९ ॥ पवित्रेणपुनीहि । माशुक्रेणदेवदीद्यत् ॥

अग्नेक्कत्वाक्कतुँ १ऽरनु॥४०॥ यत्तेपवित्रंमर्चिष्ष्यग्ग्नेवितंतमन्तरा॥
ब्रह्मतेनपुनातुमा ॥ ४१ ॥ पवमानःसः ॥ पवमानःसोऽअद्यनः
पवित्रेणव्विचर्षणिः ॥ यःपोतासपुनातुमा ॥ ४२ ॥ उभाब्भ्यान्देव।
सवितःपवित्रेणसवेनच ॥ माम्पुनीहिव्विश्श्वतः ॥ ४३ ॥ व्वैश्श्वदेवी
पुनती । देव्व्यागाद्यस्यामिमाबह्व्यस्तन्न्वोवीतपृष्ठाः ॥ तयामदन्तः
सधमादेषुव्वयꣳस्यामपतयोरयीणाम् ॥ ४४॥ येसमानाःसमनसः
पितरोयमराज्ज्ये ॥ तेषाँल्लोकःस्वधानमोयज्ञोदेवेषुकल्प्पताम्॥४५

येसमानाः ॥ येसमानाःसमनसोजीवाजीवेषुमामकाः ॥ तेषाᳬ
श्रीर्म्मयिकल्प्पतामस्म्मिँल्लोकेशतᳬसमाः ॥ ४६ ॥ द्वेसृती । ऽअ
शृणवम्पितॄणामहन्देवानामुतमर्त्यानाम् ॥ ताब्भ्यामिदंविश्श्वमे
जत्समेतियदन्तरापितरम्मातरञ्च ॥ ४७ ॥ इदᳬहविः ॥ इदᳬह
विःप्रजननम्मेऽअस्तुदशवीरᳬसर्व्वगणᳬस्वस्तये ॥ आत्मसनिप्प्र
जासनिपशुसनिलोकसन्न्यभयसनि ॥ अग्निःप्प्रजाम्बहुलाम्मेक
रोत्वन्नम्पयोरेतोऽअस्म्मासुधत्त ॥४८॥ [१७] उदीरताम् ॥ उदी

रतामवंरऽउत्परासऽउन्मध्यमाःपितरः÷सोम्म्यासः÷ ॥ असुंऽयऽ
ईयुरंवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ ४९ ॥ अङ्गिरसोनः ।
पितरोनवंग्वाऽअथर्व्वाणोभृगवःसोम्म्यासः÷ ॥ तेषांव्वयꣳसुमतौ
यज्ञियानामपिभद्रेसौमनसेस्याम ॥ ५० ॥ येनः÷ ॥ येनःपूर्वेपित
रः÷सोम्म्यासोनूहिरेसोमपीथंव्वसिष्ठाः ॥ तेभिंर्यमःसꣳरराणोह
वीꣳष्युशन्नुशद्भिः÷प्रतिकाममत्तु ॥ ५१ ॥ त्वꣳसोम ॥ त्वꣳसो
मप्प्रचिकितोमनीषात्वꣳरजिष्ठमनुनेषिपन्थाम् ॥ तवप्प्रणीतीपि

तरोनऽइन्दोदेवेषुरत्कैमभजन्तधीराः ॥ ५२ ॥ त्वयाहि ॥ त्वया
हिनः पितरः सोमपूर्वेकर्म्माणिचक्रुः पवमानधीराः ॥ वृन्वन्नवातः
परिधीं १ ऽरपोर्णुवीरेभिरश्वैर्म्मघवाभवानः ॥ ५३ ॥ त्वꣳसोम ।
पितृभिः संविदानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्दोह
विषाविधेमवयꣳस्यामपतयोरयीणाम् ॥ ५४ ॥ बर्हिषदःपितरः ॥
बर्हिषदःपितरऽऊत्यर्वागिमावोहव्याचकृमाजुषध्वम् ॥ तऽआगता
वसाशन्तमेनाथानःशंय्योररपोदधात ॥ ५५ ॥ आहम् ॥ आहम्पि

तन्त्सुविदत्राँ२ऽअवित्सिनपातञ्चविक्रमणञ्चविष्णोः ॥ बर्हिषदो
येस्वधयासुतस्यभजन्तापित्वस्तऽइहागमिष्ठाः ॥ ५६ ॥ उपहूताः
पितर÷ । सोम्म्यासोबर्हिष्ष्येषुनिधिषुप्प्रियेषु ॥ तऽआगमन्तुतऽइ
हश्श्रुवन्त्वधिब्ब्रुवन्तुतेवन्त्वस्म्मान् ॥ ५७ ॥ आयन्तु । नःपितर÷
सोम्म्यासोग्निष्ष्वात्ताःपथिभिर्द्देवयानैः ॥ अस्म्मिन्यज्ञेस्वधयाम
दन्तोधिब्ब्रुवन्तुतेवन्त्वस्म्मान् ॥ ५८ ॥ अग्निष्ष्वात्ताःपितरः ॥
अग्निष्ष्वात्ताःपितरऽएहगच्छतसद÷सदःसदतसुप्प्रणीतयः ॥ अ

त्ताहुवीᳫंषिप्प्रयंतानिवर्हिष्ष्यथांरयिᳫंसर्व्ववीरन्दधातन ॥ ५९ ॥
येऽअग्निष्ष्वात्ताः ॥ येऽअंग्निष्ष्वात्तायेऽअनंग्निष्ष्वात्तामद्ध्येदि
वःस्वधयांमादयंन्ते ॥ तेब्भ्यं÷स्वराडसुंनीतिमेतांय्यंथावशन्तन्न्व
ङ्कल्प्पयाति ॥ ६० ॥ अग्निष्ष्वात्तान्तृतुमतं÷ ॥ अग्निष्ष्वात्तान्तृतुम
तोंहवामहेनाराशᳫंसेसोंमपीथंय्यंऽआशुः ॥ तेनोंविप्प्रांसᳫंसुहवा
भवन्तुवयᳫंस्यांमपतंयोरयीणाम् ॥ ६१ ॥ [ १३ ] आच्याजानु ।
दक्षिणतोनिपद्द्येमंय्यज्ञमभिगृंणीतविश्श्वे ॥ माहिᳫंसिष्टपितरःके

नोचिन्नोयह्वऽआगः पुरुषताकरांम ॥ ६२ ॥ आसीनासोऽअरुणी
नांम् ॥ आसीनासोऽअरुणीनांमुपस्थेरयिन्धंत्तदाशुषेमर्त्याय ॥ पुत्रे
भ्य्यः पितरस्तस्यवस्वहप्रयंच्छततऽइहोर्जन्दधात ॥ ६३ ॥ यमंग्ने ।
कव्यवाहनत्वंचिन्मन्यसेरयिम् ॥ तन्नोगीर्भिःश्रवाय्यन्देवत्रापन
यायुजम् ॥ ६४ ॥ योऽअग्निः । कव्यवाहनःपितृन्यक्षहतावृधः ॥
प्रेदुहव्यानिवोचतिदेवेभ्यश्चपितृभ्युऽआ ॥ ६५ ॥ त्वमंग्ने ॥ त्वम
ग्नऽईडितःकव्यवाहनावाड्व्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृ

ब्भ्यं स्वधयातेऽअक्षन्नद्धित्वन्देवप्प्रयंताहवीꣳषि ॥६६॥ येचं ॥ ये
चेहपितरोयेचनेहयाँश्चंविद्मयाँ २ऽउंचनप्प्रंविद्म ॥ त्वंवेत्थयतिते
जातवेदः स्वधाभिर्य्यज्ञꣳसुकृंतञ्जुषस्व ॥६७॥ इदम्पितृब्भ्योनमोऽ
अस्त्वद्ययेपूर्वासोयऽउपंरासऽईयुः ॥ येपार्थिवेरजस्यानिषंत्तायेवांनू
नꣳसुंवृजनांसुविक्षु ॥६८॥ अधायथां । नः पितरः परांसः प्प्रत्नासोऽ
अग्नऽऋतमांशुषाणाः ॥ शुचीदंयन्दीधिंतिमुक्क्थशासः क्षामांभिन्दं
न्तोऽअरुणीरपंव्रन् ॥ ६९ ॥ उशन्तंस्त्वा ॥ उशन्तंस्त्वानिधीमह्यु

शन्तुᳬसमिंधीमहि ॥ उशन्तुंशतऽआवंहपितॄन्हविषेऽअत्तंवे ॥७०॥
अपाम्फेनैन ॥ अपाम्फेनेंनुनमुंचेᳬशिरंऽइन्द्रोदंवर्त्तयᳬ ॥ विश्वायद
जंयुस्पृधंः ॥ ७१ ॥ [ १० ] सोमोराजा ॥ सोमोराजामृतᳬसुतऽ
ऋंजीपेणाजहान्मृत्युम् ॥ ऋतेनंसुत्यमिंन्द्रियम्विपानᳬशुक्रमन्धं
सऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥ ७२ ॥ अद्भ्यश्क्षीरम् ॥ अद्भ्यः
क्षीरंव्यंपिबत्कुङ्ङाङ्गिरसोधिया ॥ ऋतेनंसत्यमिंन्द्रियंविपानᳬशु
क्रमन्धंसऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधुं ॥७३॥ सोमंमद्भ्यश्सो

मंमन्थ्योव्यपिबच्छन्दंसाहꣳसꣳशुचिषत् ॥ ऋतेनसत्यमिन्द्रियंविपा
नꣳशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७४ ॥ ११००
शतम्० ॥ अन्नात्परिस्रुतः ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिब
त्क्षत्रम्पयꣳसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रम
न्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७५ ॥ रेतोमूत्रम् ॥ रेतोमू
त्रंविजहातियोनिम्प्रविशदिन्द्रियम् ॥ गर्भोजरायुणावृतऽउल्बंज
हातिजन्मना ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्ये

न्द्रियमिदम्पयोमृतम्मधु ॥७६॥ दृष्ट्वारूपे । व्याकरोत्सत्यानृतेप्र
जापतिः ॥ अश्रद्धामनृतेदधाच्छ्रद्धाꣳसत्येप्रजापतिः ॥ ऋतेनसत्य
मिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु
॥ ७७ ॥ वेदेनरूपे । व्यपिबत्सुतासुतौप्रजापतिः ॥ ऋतेनसत्यमि
न्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७८॥
दृष्ट्वापरिस्रुतः ॥ दृष्ट्वापरिस्रुतोरसꣳशुक्रेणशुक्रंव्यपिबत्पयꣳसोमं
म्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रि

यमिदम्पयोमृतम्मधु ॥ ७९॥ [८] सीसैनतन्त्रेम् ॥ सीसैनतन्त्रम्म
नंसामनीषिणंऽऊर्णासूत्रेणंकवयोवयन्ति ॥ अश्विनायज्ञᳬसविता
सरंस्वतीन्द्रस्यरूपंवरुणोभिषज्ज्यन् ॥ ८० ॥ तदंस्य । रूपममृतᳬ
शचीभिस्तिस्रोदधुर्देवताᳬसᳬरराणाः ॥ लोमानिशष्पैर्बहुधानतो
क्मभिस्त्वगस्यमाᳬसमभवन्नलाजाः ॥८१॥ तदश्विना । भिषजा
रुद्रवर्त्तनीसरंस्वतीवयतिपेशोऽअन्तरम् ॥ अस्थिमज्जानम्मासरैᳬ
कारोतरेणदधंतोगवान्त्वचि ॥ ८२ ॥ सरंस्वतीमनंसा । पेशलंवसु

नासत्याभ्यांव्वयतिदर्शतंव्वपुः ॥ रसम्परिस्रुतानरोहितन्नग्नहुर्द्धीर
स्तसंरन्नवेमं ॥ ८३ ॥ पयसाशुक्रम् ॥ पयसाशुक्रममृतंञ्जनित्रठ्ठसु
रयामूत्रांज्जनयन्तुरेतः ॥ अपामतिन्दुर्म्मतिम्बाधमानाऽऊवद्ध्यंव्वा
तर्ठ्ठसव्वन्तदारात् ॥ ८४ ॥ इन्द्रः सुत्रामाहृदयेनसत्यम्पुरोडाशेन
सविताजजान ॥ यकृत्क्लोमानंव्वरुणोभिषज्ज्यन्मतस्नेवायव्यैर्न्नमि
नातिपित्तम् ॥ ८५ ॥ आन्त्राणिस्थालीः ॥ आन्त्राणिस्थालीर्म्म
धुपिन्वमानागुदाःपात्राणिसुदुघानधेनुः ॥ श्येनस्यपत्रन्नप्लीहाश

सातै ॥ ८९ ॥ अविर्न्न । मेषां ॥ रसंम्परिस्रुतानरोहितन्नग्नहुर्द्धीर
ग्ग्रहाभ्याम्॥सरस्वत्युपवाकैर्व्यम ॥ पयंसाशुक्रममृतञ्जनित्रक्वसु
इन्द्रस्यरूपम् ॥ इन्द्रस्यरूपमृषभतिन्दुर्म्मतिम्बाधमानाऽऊवंद्ध्यंवा
ग्रहाभ्याम् ॥ यवानबर्हिर्भ्रुविसुत्रामाहृदयेनसत्यम्पुरोडाशेन
खांत् ॥ ९१ ॥ आत्कमन्नुपस्त्थे ॥ भिषज्ज्यस्मतस्त्रेवायव्यैर्न्नमिं
खेश्म्मश्रूणिनव्यांग्घ्रलोम ॥ केशाग्लीः ॥ आन्त्राणिस्त्थालीम्म
हस्यलोमत्विषिरिन्द्रियाणि ॥ ९२ ॥ उतुः ॥ श्येनस्यपत्रन्नप्लीहाश

त्वमग्निभिषजातदश्विनात्मानमङ्गैः समधात्सरस्वती ॥ इन्द्रस्यरू
पꣳशतमानमायुश्चन्द्रेणज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरस्वती
योन्याम् ॥ सरस्वतीयोन्याङ्गर्भमन्तरश्विभ्याम्पत्नीसुकृतम्बि
भर्ति ॥ अपाꣳरसेनवरुणोनसाम्नेन्द्रꣳश्रियैजनयन्नप्सुराजा
॥ ९४ ॥ तेजः पशूनाम् ॥ तेजः पशूनाꣳहविरिन्द्रियावत्परिस्रु
तापयसासारघम्मधु ॥ अश्विभ्यान्दुग्धम्भिषजासरस्वत्यासुता
सुताभ्याममृतः सोमऽइन्दुः ॥ ९५ ॥ [१६] इतिश्रीवाजसनेयसं

हितायांएकोनविंशतितमोऽध्यायः ॥ १९ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाकसूत्रम् ॥ क्षत्रस्ययोनिस्त्रयोदशयद्देवादशाभ्यादधाम्यष्टौ
योभूतानांचतस्रःसमिद्धइंद्रएकादशायात्वष्टौसमिद्धोअग्निर्द्वादशा
श्विनाहविस्त्रयोदशाश्विनातेजसैकादशनवनवातिः ॥ हरिःॐ क्षत्र
स्ययोनिं÷ ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि ॥ मात्त्वाहि६सी
न्मामाहि६सीः ॥ १ ॥ निषसाद । धृतव्रतोवरुणःपस्त्यास्वा ॥
साम्राज्यायसुक्रतुं÷ ॥ मृत्योःपाहिविद्योत्पाहि ॥ २ ॥ देवस्यत्वा ।

सवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ अश्विनोर्ब्भै
षज्ज्येनतेजसेब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनवीर्य्या
यान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्श्रियैयशसेभिषिञ्चा
मि ॥ ३ ॥ कोसि । कतमोसिकस्मैत्वाकायत्वा ॥ सुश्लोकसुमङ्ग
लसत्त्यराजन् ॥ ४ ॥ शिरोमे ॥ शिरोमेश्रीर्य्यशोमुखन्त्विषिःके
शाश्चश्मश्रूणि ॥ राजामेप्प्राणोऽअमृतꣳसम्म्राट्चक्षुर्व्विराट्श्रोत्र
म् ॥ ५ ॥ जिह्वामे । भद्रंवाङ्महोमनोमन्युःस्वराडामः ॥ मोदाः

प्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ६ ॥ बाहूमे ॥ बाहूमेबलं
मिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥७॥ पृष्ठी
र्म्मे । राष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी । ऊरूऽअरत्नीजानुनीवि
शोमेङ्गानिसर्वतः ॥ ८ ॥ नाभिर्म्मे । चित्तंविज्ञानम्पायुर्म्मेपचि
तिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः ॥ जङ्घा
भ्याम्पद्भ्यान्धर्म्मोस्मिविशिराजाप्रतिष्ठितः ॥ ९ ॥ प्रतिक्षत्रे ।
प्रतितिष्ठामिराष्ट्रेप्रत्यश्वेषुप्रतितिष्ठामिगोषु ॥ प्रत्यङ्गेषुप्रतिति

ष्ठाम्म्यात्क्मन्न्प्रतिंप्प्राणेषुप्प्रतितिष्ठामिपुष्टेप्प्रतिद्यावापृथिव्योःप्प्र
तितिष्ठामियज्ञे ॥ १० ॥ त्रयादेवाः ॥ त्रयादेवाऽएकादशत्रयस्त्रिꣳ
शाःसुराधसः ॥ बृहस्प्पतिंपुरोहितादेवस्यसवितुःसवे ॥ देवादेवैर
वन्तुमा ॥ ११ ॥ प्रथमाद्वितीयैः ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयै
स्तृतीयाःसत्येनसत्यंय्यज्ञेनयज्ञोयजुर्भिर्य्यजूꣳषिसामभिः सा
मान्यृग्भिर्ऋचःपुरोनुवाक्याभिःपुरोनुवाक्यायाज्याभिर्य्या
ज्यावषट्कारैर्वषट्काराऽआहुतिभिराहुतयोमेकामान्त्समर्द्धयन्तुभूः

स्वाहा ॥ १२ ॥ लोमानिप्पर्यतिः ॥ लोमानिप्प्रयतिम्मर्मत्वङ्गम्ऽ
आनंतिरागंतिः ॥ मा(ँ)सम्मऽउपनतिर्व्वस्विस्त्थम्मज्जाम्ऽआनंतिः
॥ १३ ॥ [१३] यद्देवाः ॥ यद्देवादेवहेडनन्देवासश्चकृमावयम् ॥
अग्निम्मातस्म्मादेनंसोविश्वान्मुञ्चत्व(ँ)हंसः ॥ १४ ॥ यदिदिवा ॥
यदिदिवायदिनक्तमेनां(ँ)सिचकृमावयम् ॥ वायुम्मातस्म्मादेनं
सोविश्वान्मुञ्चत्व(ँ)हंसः ॥ १५ ॥ यदिजाग्ग्रत् ॥ यदिजाग्ग्रद्यदि
स्वप्नऽएनां(ँ)सिचकृमावयम् ॥ सूर्य्योमातस्म्मादेनंसोविश्वान्मु

ब्रुत्वꣳहसः॥१६॥ यद्ग्रामे॥ यद्ग्रामेयदरण्ण्येयत्सभायाम्यदिन्द्रि
ये॥ यच्छूद्रेयदर्य्येयदेनश्चकृमावयंय्यदेकस्याधिधर्म्मणितस्याव
यजनमसि॥१७॥ यदापः॥ यदापोऽअघ्न्याऽइतिवरुणेतिशपा
महेततोवरुणनोमुञ्च॥ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः॥
अवदेवैर्देवकृतमेनोयक्ष्यवमर्त्यैर्म्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पा
हि॥१८॥ समुद्रेतेहृदयमप्स्वन्तःसन्त्वाविशन्त्वोषधीरुतापः॥
सुमित्रियानऽआपऽओषधयः सन्तुदुर्म्मित्रियास्तस्मैसन्तुयो

समुविश्वमिदञ्जगत् ॥ वैश्वानरज्ज्योतिर्भूयासंविभूङ्कामाऽन्यूत्स्न
वैभूःस्वाहा ॥ २३ ॥ [१०] ॥ अभ्यादधामि ॥ समिधमग्नेव्रतप
तेत्वयि ॥ व्रतञ्चश्श्रद्धाञ्चोपैमीन्धेत्वादीक्षितोऽअहम् ॥ २४ ॥ य
त्रब्रह्म । चक्षत्रञ्चसम्म्यञ्चौचरतश्सह ॥ तंल्लोकम्पुण्ण्यम्प्रज्ञेषंऽय
त्रदेवाःसहाग्निना ॥ २५ ॥ यत्रेन्द्रः ॥ यत्रेन्द्रश्चवायुश्चसम्म्यञ्चौ
चरतश्सह ॥ तंल्लोकम्पुण्ण्यम्प्रज्ञेषंऽयत्रसेदिर्न्नविद्यते ॥ २६ ॥ अछ
शुनाते । ऽअछशुःपृञ्च्यताम्परुषापरुः ॥ गन्धस्तेसोममवतुमदाय

रसोऽअद्धयुतः ॥ २७ ॥ सिञ्चन्तिपरि ॥ षिञ्चत्युत्सिञ्चन्तिपुनन्तिं
च ॥ सुरायैबभ्रवैमदेकिन्त्वोवदतिकिन्त्वः ॥ २८ ॥ धानावन्तङ्क
रम्भिणम् ॥ धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम् ॥ इन्द्रंप्रात
र्जुषस्वनः ॥ २९ ॥ बृहदिन्द्राय । गायतमरुतोवृत्रहन्तमम् ॥ येन
ज्योतिरजनयन्नृतावृधोदेवन्देवायजागृवि ॥ ३० ॥ अद्ध्वर्य्योऽअ
द्रिभिः । सुतꣳसोमम्पवित्रऽआनय ॥ पुनीहीन्द्रायपातवे ॥३१॥
[ ८ ] योभूतानाम् ॥ योभूतानामधिपतिर्य्यस्मिँल्लोकाऽअधिश्रि

ताः ॥ यऽईशेमहतोमहाँस्तेनगृह्णामित्वामहम्मयिगृह्णामित्वाम
हम् ॥ ३२ ॥ उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वा
सुत्राम्णऽ एषतेयोनिरश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्रा
म्णे ॥ ३३ ॥ प्राणपामे । ऽअपानपाश्चक्षुष्पाःश्रोत्रपाश्चमे ॥ वा
चोमेविश्वभेषजोमनसोसिविलायकः ॥ ३४ ॥ अश्विनकृतस्यते ॥
अश्विनकृतस्यतेसरस्वतिकृतस्येन्द्रेणसुत्राम्णाकृतस्य ॥ उपहूतऽ
उपहूतस्यभक्षयामि ॥ ३५ ॥ [४] समिद्धऽइन्द्रः ॥ समिद्धऽइ

न्द्रऽउपसामनीकेपुरोरुचापूर्वकृद्वावृधानः ॥ त्रिभिर्देवैस्त्रिꣳशताव
ज्रबाहुर्जघानंवृत्रंविदुरोववार ॥ ३६ ॥ नराशꣳसःप्प्रति ॥ नरा
शꣳसःप्प्रतिशूरोमिमानस्तनूनपात्प्रतियज्ञस्यधाम ॥ गोभिर्वपावा
न्मधुनासमञ्जन्हिरण्यैश्चन्द्रीयजतिप्प्रचेताः ॥ ३७ ॥ ईडितोदे
वैः ॥ ईडितोदेवैर्हरिवाँ२ऽअभिष्टिराजुह्वानोहविषाशर्द्धमानः ॥
पुरन्दरोगोत्रभिद्वज्रबाहुरायातुयज्ञमुपनोजुषाणः ॥ ३८ ॥ जु
षाणोबर्हिः ॥ जुषाणोबर्हिर्हरिवाँ२ऽइन्द्रःप्प्राचीनꣳसीदत्प्रदि

शोपृथिव्याः ॥ उरुप्प्रथाहप्प्रथमानꣳस्योनमादित्यैरक्कवसुभिहंस
जोषाः॥३९॥इन्द्रन्दुरः॥कवष्ष्योधावमत्ताव्वृषाणꣳव्यन्तुजनेयहं
सुपत्नीः ॥ द्वारोदेवीरभितोऽविश्श्रयन्ताꣳसुवीरावीरम्प्प्रथमाना
महोभिः ॥ ४० ॥ उषासानक्ता । बृहतीबृहन्तम्पयस्वतीसुदुघेशूर
मिन्द्रम् ॥ तन्तुन्ततम्पेशसासंव्वयन्तीदेवानान्देवंव्यजतहसुरुक्मे
॥ ४१ ॥ दैव्यामिमाना । मनुषहपुरुत्राहोताराविन्द्रम्प्रथमासुवा
चा ॥ मूर्द्धन्यज्ञस्यमधुनादधानाप्प्राचीनञ्ज्योतिर्हविषावृधातः

॥ ४२ ॥ तिस्रोदेवीः ॥ तिस्रोदेवीर्हविषावर्द्धमानाऽइन्द्रञ्जुषाणा
जनयोनपत्नीः॥अच्छिन्नन्तन्तुंपयंसासरस्वतीडादेवीभारतीविश्व
तूर्त्तिः ॥ ४३ ॥ त्वष्टादधत् ॥ त्वष्टादधच्छुष्ममिन्द्रायवृष्णेपाको
चिष्टुर्यशसेपुरूणि ॥ वृषायजन्वृषणम्भूरिरेतामूर्द्धन्यज्ञस्यसमन
क्तुदेवान् ॥ ४४ ॥ वनस्पतिरवसृष्टः ॥ वनस्पतिरवसृष्टोनपाशै
स्त्मन्यासमञ्जञ्छमितानदेवः ॥ इन्द्रस्यहव्यैर्जठरम्पृणानःस्वदा
तियज्ञम्मधुनाघृतेन ॥ ४५ ॥ स्तोकानामिन्दुम् ॥ स्तोकानामिन्दु

म्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् ॥ घृतप्प्रुषामनसामो
दमानाः स्वाहादेवाऽअमृतामादयन्ताम् ॥ ४६ ॥ [११] आयांतु ॥
आयात्विन्द्रोवसऽउपनऽइहस्तुतः संधमादस्तुशूरः ॥ वावृधानस्त
विषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्ष्यात् ॥ ४७ ॥ आनः ॥
आनऽइन्द्रोदूरादानआसादभिष्टिकृदवसेयासदुग्ग्रः ॥ ओजिष्ठेभि
र्नृपतिर्वज्ज्रबाहुः सङ्गेसमत्सुतुर्वणिः पृतन्न्यून् ॥ ४८ ॥ आनः ॥
आनऽइन्द्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ॥ तिष्ठातिव

ज्ज्रीमघवाविरप्शीमंय्यज्ञमनुनोवाजसातौ ॥ ४९ ॥ त्रातारमि
न्द्रम् ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्व
यामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्र÷ ॥ ५० ॥ इ
न्द्र÷सुत्रामा ॥ इन्द्र÷सुत्रामास्ववाँ२ऽअवोभि꞉सुमृडीकोभवतु
विश्ववेदा꞉ ॥ बाधतान्द्वेषोऽअभयङ्कृणोतुसुवीर्य्यस्यपतय꞉स्याम
॥ ५१ ॥ तस्यवयम् ॥ तस्यवयꣳसुमतौयज्ञियस्यापिभद्रेसौमनसे
स्याम ॥ ससुत्रामास्ववाँऽइन्द्रोऽअस्म्मेऽआराच्चिद्द्वेष÷सनुतर्य्युयो

तु ॥५२॥ आमन्द्रैः ॥ आमन्द्रैरिन्द्रहरिभिर्याहिमयूररोमभिः ॥
मात्वाकेचिन्नियमन्विपाशिनोतिधन्वेवताँ२इहि ॥ ५३ ॥ एवेत् ॥
एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्चन्त्यर्कैः ॥ सनस्तुतो
वीरवद्धातुगोमद्यूयम्पातस्वस्तिभिःसदानः ॥ ५४ ॥ [८] समिद्धोऽ
अग्निः ॥ समिद्धोऽअग्निरश्विनातप्तोघर्मोविराट्सुतः ॥ दुहेधेनुः
सरस्वतीसोमꣳशुक्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा । सुतेश्वि
नोभासरस्वती ॥ मध्वारजाꣳसीन्द्रियमिन्द्रायपथिभिर्वहान् ॥

॥५६॥ इन्द्रायेन्दुम् ॥ इन्द्रायेन्दुꣳसरस्वतीनराशꣳसेननग्नहुम् ॥
अधातामश्विनामधुभेषजम्भिषजासुते ॥ ५७ ॥ आजुह्वानासर
स्वती । न्द्रायेन्द्रियाणिवीर्य्यम् ॥ इडाभिरश्विनाविषꣳसमूर्ज्जꣳ
सꣳरयिन्दधुः ॥ ५८ ॥ अश्विनानमुचेः । सुतꣳसोमꣳशुक्रम्परि
स्रुता ॥ सरस्वतीतमाभरद्बर्हिषेन्द्रायपातवे ॥ ५९ ॥ कवष्ष्योन ।
व्यचस्वतीरश्विभ्यान्नदुरोदिशः ॥ इन्द्रोनरोदसीऽउभेदुहेकामा
न्त्सरस्वती ॥६०॥ उषासानक्तम् ॥ उषासानक्तमश्विनादिवेन्द्रꣳ

सायमिन्द्रियैꣳ ॥ सञ्ज्ञानानेसुपेशसासमञ्ज्ञातेसरस्वत्या ॥ ६१ ॥
पातन्नः ॥ पातन्नोऽअश्विनादिवापाहिनक्कꣳसरस्वति ॥ दैव्याहो
ताराभिषजापातामिन्द्रꣳसचासुते ॥ ६२ ॥ तिस्रस्त्रेधा । सरस्वत्य
श्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्म्मदम् ॥६३॥
अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभेषजन्नꣳसरस्वती ॥ इन्द्रे
त्वष्टायशꣳश्रियꣳरूपꣳरूपमधुꣳसुते ॥ ६४ ॥ ऋतुथेन्द्रः ॥ ऋतु
थेन्द्रोवनस्पतिःशशमानःपरिस्रुता ॥ कीलालमश्विभ्याम्मधुदु

हेधेनुꣳसरस्वती ॥६५॥ गोभिर्न्न। सोमंमश्विनामासरेणपरिस्रुता ॥
समंधातꣳसरस्वत्यास्वाहेन्द्रेसुतम्मधु ॥ ६६ ॥ [ १२ ] अश्विनाह
विः ॥ अश्विनाहविरिन्द्रियन्नमुचेर्द्धियासरस्वती ॥ आशुक्रमासुरा
द्वसुमघमिन्द्रायजभ्रिरे ॥ ६७ ॥ यमश्विना ॥ यमश्विनासरस्व
तीहविषेन्द्रमवर्द्धयन् ॥ सबिभेदवलम्मघन्नमुचावासुरेसचा ॥६८॥
तमिन्द्रम् ॥ तमिन्द्रम्पशवꣳसचाश्विनोभासरस्वती ॥ दधानाऽअ
भ्यनूषतहविषायज्ञऽइन्द्रियैः ॥ ६९ ॥ यऽइन्द्रे ॥ यऽइन्द्रऽइन्द्रि

यन्दुधुश्सवितावरुणोभगः ॥ ससुत्रामाहविष्पतिर्यजमानायस
श्चत ॥ ७० ॥ सवितावरुणः ॥ सवितावरुणोदधद्यजमानायदा
शुषे ॥ आदत्तनमुचेर्वसुसुत्रामाबलमिन्द्रियम् ॥ ७१ ॥ वरुणःक्ष
त्रम् ॥ वरुणःक्षत्रमिन्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामायशं
साबलन्दधानायज्ञमाशत ॥ ७२ ॥ अश्विनागोभिः ॥ अश्विना
गोभिरिन्द्रियमश्वेभिर्वीर्य्यम्बलम् ॥ हविषेन्द्रꣳसरस्वतीयजमान
मवर्द्धयन् ॥ ७३ ॥ तानासत्या । सुपेशसाहिरण्यवर्त्तनीनरा ॥

सरस्वतीहुविष्मतीन्द्रकर्म्मसुनोवत ॥ ७४ ॥ ताभिषजा । सुक
र्म्मणासासुदुघासरस्वती ॥ सुवृत्रहाशतक्रतुरिन्द्रायदधुरिन्द्रियम्
॥ ७५ ॥ युवꣳसुराममम् ॥ युवꣳसुराममश्विनानमुचावासुरेसचा ॥
विपिपानाꣳसरस्वतीन्द्रङ्कर्म्मस्वावत ॥ ७६ ॥ पुत्रमिवपितरौ ॥
पुत्रमिवपितरावश्विनोभेन्द्रावथुꣳकाव्यैर्दꣳसनाभिꣳ ॥ यत्सुराम
व्यपिवꣳशचीभिꣳसरस्वतीत्वामघवन्नभिष्णक् ॥ ७७ ॥ यस्मिन्
न्नश्वासꣳ ॥ यस्मिन्नश्वासऽऋषभासऽउक्षणोवशामेषाऽअवसृष्टा

सऽआहुताः ॥ कीलालपेसोमम्पृष्ठायवेधसेहृदामतिञ्जनयेचारुमग्नये ॥ ७८ ॥ अहाव्यग्ने । हविरास्येतेस्रुचीवघृतञ्चम्म्वीवसोमः ॥ वाजसनिꣳरयिमस्मेसुवीरम्प्रशस्तन्धेहियशसम्बृहन्तम् ॥ ७९ ॥ [ १३ ] शतम् १२०० ॥ अश्विनातेजसा । चक्षुःप्प्राणेनसरस्वती वीर्य्यम् ॥ वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ ८० ॥ गोमदूषुणासत्या ॥ गोमदूषुणासत्याश्वावद्यातमश्विना ॥ वर्त्तीरुद्रानृपाय्यम् ॥ ८१ ॥ नयत् ॥ नयत्परोनान्तरऽआदधर्षद्दृषण्वसू ॥ दुःशꣳसो

मत्यौंरिपुः ॥ ८२ ॥ तानं÷ ॥ तानुऽआवोढमाश्विनारयिम्पिशङ्ग
सन्दृशम् ॥ धिष्ण्यांवारिवोविदम् ॥ ८३ ॥ पावकानं÷ ॥ पावका
नःसरस्वतीवाजेभिर्वाजिनीवती ॥ यज्ञंवष्टुधियावसुः ॥ ८४ ॥ चो
दयित्रीसूनृतानाम् ॥ चोदयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् ॥ य
ज्ञन्दधेसरस्वती ॥ ८५ ॥ महोऽअर्ण्णं÷ ॥ महोऽअर्ण्णःसरस्वतीप्प्र
चेतयतिकेतुना ॥ धियोविश्वाविराजति ॥ ८६ ॥ इन्द्रायाहि । चि
त्रभानोसुताऽइमेत्वायवं÷ ॥ अण्वीभिस्तनापूतासं÷ ॥ ८७ ॥

इन्द्रायाहि । धियेषितोविप्रजूतᳫंसुतावतः ॥ उपब्रह्माणिवाघतः
॥ ८८ ॥ इन्द्रायाहि ॥ इन्द्रायाहितूतुजानऽउपब्रह्माणिहरिवः ॥
सुतेदधिष्वनश्चनः ॥ ८९ ॥ अश्विनापिबताम् ॥ अश्विनापिबता
म्मधुसरस्वत्यासजोषसा ॥ इन्द्रःसुत्रामावृत्रहाजुषताᳫंसोम्म्य
म्मधु ॥ ९० ॥ [ ११ ] इतिश्रीवाजसेनयसंहितायांविंशतितमोऽ
ध्यायः ॥ २० ॥ ॥ ॥ श्रीवेदपुरुषायनमः ॥ ॥ ॥

इति श्रीवाजसनेयसंहितापूर्वविंशतिः समाप्ता ॥

॥ श्रीगणेशायनमः ॥ अनुवाक्सूत्रम् ॥ इमम्मेसमिद्धोअग्निरेका
दशकौवसंतेनऋतुनापङ्क्तोतायक्षत्सामिधाग्निंद्वादशाश्विनौछागस्य
सप्तदेवंबर्हिंश्चतुर्दशषडेकषष्टिः ॥ हरिःॐ इमम्मे । वरुणश्श्रुधीह
वंमुद्याचंमृडय ॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वा । यामिब्रह्मणा
वन्दंमानस्तदाशांस्तेयजंमानोहविर्भिः ॥ अहेडमानोवरुणेहबो
द्धुरुंशꣳसमानऽआयुःप्रमोषीः ॥ २ ॥ त्वन्नः ॥ त्वन्नोऽअग्नेवरु
णस्यविद्वान्देवस्यहेडोऽअवंयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशो

शुंचानोविश्वाद्वेषांꣳसिप्प्रमुंमुग्ध्यस्म्मत् ॥ ३ ॥ सत्वम् ॥ सत्व
न्नोऽअग्नेवमोभवोतीनेदिष्ठोअस्याऽउषसोव्युष्टौ ॥ अवंयक्ष्वनोव
रुणह्ररराणोवीहिम्मृडीकꣳसुहवोनऽएधि ॥ ४ ॥ महीमुषु । मातरꣳ
सुव्रतानामृतस्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳसु
शर्म्माणमदितिꣳसुप्प्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रा
माणम्पृथिवीन्द्यामनेहसꣳसुशर्म्माणमदितिꣳसुप्प्रणीतिम् ॥ दैवी
न्नावंꣳस्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये ॥ ६ ॥ सुनावमा

रुँहेयम् ॥ सुनावमारुँहेयमस्त्रवन्तीमनागसम् ॥ शतारित्राᳬंस्वस्त
यें ॥ ७ ॥ आनं÷ ॥ आनौमित्रावरुणाघृतैर्गव्यूंतिमुक्षतम् ॥ म
द्ध्वारजाᳬंसिसुक्रतू ॥ ८ ॥ प्रबाहवा । सिसृतञ्जीवसेनऽआनोगव्यूं
तिमुक्षतङ्घृतेनं ॥ आमाजनेंश्श्रवयतंय्युवानाश्श्रुतम्मेमित्रावरुणा
हवेमा ॥ ९ ॥ शन्नं÷ ॥ शन्नोभवन्तुवाजिनोहवेषुदेवतांतामितद्र
वंःस्वर्क्काः ॥ जम्भयन्तोहिंवृकᳬंरक्षाᳬंसिसनेम्म्यस्म्मद्युयवन्नमी
वाः ॥ १० ॥ वाजेंवाजेवत । वाजिनोनोधनेषुविप्राऽअमृताऽऋ

तज्ञाꣳ ॥ अस्यमद्धं÷पिबतमादयंद्धन्तृप्ताय्यातपथिभिर्द्देवयानैꣳ
॥ ११ ॥ समिंद्धोऽअग्निः ॥ समिधासुसंमिद्धोव्वरेण्यꣳ ॥ गायत्री
च्छन्दंऽइन्द्रियन्त्र्यविर्गौर्व्वयोदधुꣳ ॥ १२ ॥ तनूनपाच्छुचिंव्रतꣳ ॥
तनूनपाच्छुचिंव्रतस्तनूपाश्चसरंस्वती ॥ उष्णिहाच्छन्दंऽइन्द्रिय
न्दित्यवाड्गौर्व्वयोदधुꣳ ॥ १३ ॥ इडाभिरग्निः ॥ इडाभिरग्निरीड्यꣳ
सोमोदेवोऽअमर्त्यꣳ ॥ अनुष्टुप्च्छन्दंऽइन्द्रियम्पञ्चाविर्गौर्व्वयोदधुꣳ
॥ १४ ॥ सुबर्हिरग्निः । पूषण्वान्स्तीर्णबर्हिरमर्त्यꣳ ॥ बृहतीच्छ

शंसाबलꣳहुविरिन्द्रेव्वयोदधुः ॥ २४ ॥ व्वर्षाभिर्ऋतुनादित्याःस्तो
मैसप्तदुशेस्तुताः ॥ व्विरूपेणाविशौजसाहुविरिन्द्रेव्वयोदधुः ॥२५॥
शारदेनऽऋतुना । देवाऽएकविꣳशऋभवःस्तुताः ॥ व्वैराजेनाश्रि
याश्रियꣳहुविरिन्द्रेव्वयोदधुः ॥ २६ ॥ हेमन्तेनऽऋतुना । देवास्त्रि
णवेमुरुतःस्तुताः ॥ बलेनशक्करीःसहोहविरिन्द्रेव्वयोदधुः ॥२७॥
शैशिरेणऽऋतुना । देवास्त्रयस्त्रिꣳशेमृताःस्तुताः ॥ सत्येनरेवतीः ॥ १ ॥
क्षत्रꣳहुविरिन्द्रेव्वयोदधुः ॥ २८ ॥ [ ६ ] होतायक्षत् ॥ होतायक्ष

त्समिधाग्निमिडस्पदेऽश्विनेन्द्रꣳसरस्वतीमजोधूम्रोनगोधूमैःकुव
लैर्भेषजम्मधुशष्पैर्न्नतेजऽइन्द्रियम्पयꣳसोमःपरिस्रुताघृतम्मधु
व्यन्त्वाज्यस्यहोतर्य्यज ॥ २९ ॥ होतायक्षत्तनूनपात्सरस्वती
म् ॥ होतायक्षत्तनूनपात्सरस्वतीमविम्मेषोनभेषजम्पथामधुमता
भरन्नश्विनेन्द्रायवीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिःपयः
सोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज ॥ ३० ॥ होताय
क्षन्नराशꣳसन्न। नग्नहुम्पतिꣳसुरयाभेषजम्मेषःसरस्वतीभिषग्रथो

नचन्द्र्युश्विनौवपा ऽइन्द्रस्यवीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तो
क्कर्माभिःपयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यज
॥ ३१ ॥ होतायक्षदिडेडितः ॥ होतायक्षदिडेडितऽआजुह्वानःसर
स्वतीमिन्द्रम्बलेनवर्द्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्रायभेषजंय्यवैः
कर्कन्धुभिर्म्मधुलाजैर्न्नमासरम्पयःसोमः परिस्रुताघृतम्मधुव्य
न्त्वाज्यस्यहोतर्य्यज ॥३२॥ होतायक्षद्बर्हिरूर्णम्म्रदाः ॥ होताय
क्षद्बर्हिरूर्णम्म्रदाभिषङ्नासत्याभिषजाश्विनाश्वाशिशुमतीभिष

ग्ग्धेनुꣳसरस्वतीभिषग्ग्दुहऽ इन्द्रायमेषम्पयꣳसोमः परिस्रुताघृत
म्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥३३॥ होतायक्षद्दुरोदिशः कवष्ष्यो
नव्व्यचस्वतीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुःसर
स्वत्यश्विनेन्द्रायभेषजꣳशुक्रन्नज्ज्योतिरिन्द्रियम्पयꣳसोमः परि
स्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥ होतायक्षत्सुपेशः ।
सोपेनक्तन्दिवाश्विनासमञ्जातेसरस्वत्यात्विषिमिन्द्रेनभेषजꣳ
श्येनोनरजसाहृदाश्रियानमासरम्पयꣳसोमः परिस्रुताघृतम्मधु

व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥३५॥ होतायक्षद्दैव्याहोतारा । भिषजा
श्विनेन्द्रन्नजागृविदिवानक्तन्नभेषजैः शूषन्सरस्वतीभिषक्सीसेन
दुहऽइन्द्रियम्पयःसोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्य
ज ॥ ३६ ॥ होतायक्षत्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवीर्न्नभेषज
न्त्रयस्त्रिधातवोपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीवाचास
रस्वतीमहऽ इन्द्रायदुहइन्द्रियम्पयःसोमः परिस्रुताघृतम्मधुव्य
न्त्वाज्ज्यस्यहोतर्य्यज ॥३७॥ होतायक्षत्सुरेतसमृषभम् ॥ होतायक्ष

त्सुरेतंसम्भृषभन्नव्यापसुन्त्वष्टारमिन्द्रमश्विनाभिषजन्नसरस्वतीमो
जोनजूतिरिन्द्रियंवृकोनरभसोभिषग्ग्यशꣳसुरयाभेषजꣳश्रियान
मासरम्पयꣳसोमं÷ परिस्रुतांघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज
॥ ३८ ॥ होतायक्षद्वनस्पतिꣳशमितारम् ॥ होतायक्षद्वनस्पतिꣳ
शमितारꣳशतक्रतुम्भीमन्नमन्युꣳराजानंव्याघ्रन्नमसाश्विनाभा
मꣳसरस्वतीभिषगिन्द्रायदुहऽइन्द्रियम्पयꣳसोमं÷परिस्रुतांघृतम्म
धुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३९ ॥ होतायक्षदग्निꣳस्वाहा ॥ होता

यक्षदुग्निᳪंस्वाहाज्ज्यस्यस्तोकानाᳪंस्वाहामेदसाम्पृथक्स्वाहाच्छा
गमुश्विभ्याᳪंस्वाहामेषᳬसरस्वत्यैस्वाहाऽऋषभमिन्द्रायसिᳪंहा
यसहसऽइन्द्रियᳪंस्वाहाग्निर्भेषजᳪंस्वाहासोममिन्द्रियᳪंस्वाहे
न्द्रᳬसुत्रामाणᳬसवितारंवरुणम्भिषजाम्पतिᳪंस्वाहाव्वनस्पति
म्प्रियम्पाथोनभेषजᳪंस्वाहादेवाऽआज्ज्यपाजुषाणोऽअग्निर्भेषज
म्पयᳬसोमं÷परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ४० ॥ ॥ ७ ॥
[१२] होतायक्षदुश्विनौछागस्य । व्वपायामेदसोजुषेताᳪंहविर्होत

र्य्यज ॥ होतायक्षत्सरस्वतीम्मेषस्यवपायामेदसोजुषताꣳहविर्होत
र्य्यज ॥ होतायक्षदिन्द्रमृषभस्यवपायामेदसोजुषताꣳहविर्होत
र्य्यज ॥ ४१ ॥ होतायक्षदश्विनौसरस्वतीम् ॥ होतायक्षदश्विनौ
सरस्वतीमिन्द्रꣳसुत्रामाणमिमेसोमाः सुरामाणश्छागैर्नमेषैर्ऋष
भैःसुताः शष्पैर्नतोक्मभिर्लाजैर्म्महस्वन्तोमदामासरेणपरिष्कृ
ताःशुक्राःपयस्वन्तोमृताः प्प्रस्थितावोमधुश्चुतस्तानश्विनासरस्व
तीन्द्रः सुत्रामावृत्रहाजुषन्ताꣳसोम्म्यम्मधुपिबन्तुमदन्तुव्यन्तु

होतर्व्यज ॥ ४२ ॥ होतायक्षदश्विनौछागस्य ॥ हविषऽआत्तामु
द्यमद्ध्यतोमेदऽउद्धृतम्पुराद्वेषोभ्यः पुरापौरुषेय्यागृभोघस्तान्नून
ङ्घासेऽअञ्ज्राणाँय्यवसप्प्रथमानाᳪ सुमत्क्षराणाᳪशतरुद्रियाणा
मग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामतऽउ
त्सादतोङ्गादङ्गादवत्तानाङ्करतऽएवाश्विनाजुषेताᳪहविर्होतर्व्यज
॥ ४३ ॥ होतायक्षत्सरस्वतीम्मेषस्यहविषऽआवयदद्यमद्ध्यतोमेदऽ ॥ ८ ॥
उद्धृतम्पुराद्वेषोभ्यः पुरापौरुषेय्यागृभोघसन्नूनङ्घासेऽअञ्ज्राणां

व्यवसम्प्रथमानाꣳसुमत्क्षराणाꣳशतरुद्रियाणामग्निष्वात्ताना
म्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामतऽउत्सादतोङ्गादङ्गा
दवत्तानाङ्करदेव सरस्वतीजुषताꣳहविर्होतर्यज ॥ ४४ ॥ होता
यक्षदिन्द्रमृषभस्यहविषऽआवयदद्यमध्यतोमेदऽउद्भृतम्पुराद्वेषो
भ्यः पुरापौरुषेय्यागृभोघसन्नूनङ्घासेऽअज्राणांयवसप्रथमा
नाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसना
नाम्पार्श्वतःश्रोणितःशितामतऽउत्सादतोङ्गादङ्गादवत्तानाङ्करदेव

मिन्द्रोजुषताᳪंहविर्होतर्य्यज ॥ ४५ ॥ होतायक्षद्वनस्पतिमभि ।
हिपिष्टतमयारभिष्ठयारशनयाधित ॥ यत्राश्विनोश्छागस्यहविषं
प्प्रियाधामानियत्रसरस्वत्यामेषस्यहविषं प्प्रियाधामानियत्रेन्द्र
स्यऽऋषभस्यहविषं प्प्रियाधामानियत्राग्नेः प्प्रियाधामानियत्र
सोमस्यप्प्रियाधामानियत्रेन्द्रस्यसुत्राम्मणं प्प्रियाधामानियत्रस
वितुः प्प्रियाधामानियत्रव्वरुणस्यप्प्रियाधामानियत्रव्वनस्पतेः प्प्रि
यापाथाᳪंसियत्रदेवानामाज्यपानाम्प्रियाधामानियत्राग्नेहोतुः

प्रियाधामांनितत्रैतान्प्रस्तुत्यैवोपस्तुत्यैवोपावंस्रक्षद्रभीयसऽइव कृत्वीकरंदेवन्देवोवनस्प्पतिर्जुषतांᳬंहविर्होतर्य्यज॥४६॥होताय क्षदग्निᳬंस्विष्टकृतम् ॥ होतायक्षदग्निᳬंस्विष्टकृतमयाडग्निरश्विनो श्छागस्यहविषः प्प्रियाधामान्ययाट्सरस्वत्यामेषस्यहविषः प्प्रिया धामान्ययाडिन्द्रस्यऽऋषभस्यहविषः प्प्रियाधामान्ययाडग्नेः प्प्रि याधामान्ययाट्सोमस्याप्रियाधामान्ययाडिन्द्रस्यसुत्राम्णः प्प्रिया धामान्ययाट्सवितुः प्प्रियाधामान्ययाड्वरुणस्यप्प्रियाधामान्ययाड्

नस्प्पतेंःप्प्रियापाथाᳬंस्ययाद्देवानामाज्ज्यपानाम्प्प्रियाधामानिस्वक्षे
दुग्नेर्होतु÷ प्प्रियाधामानियक्षुत्स्वम्महिमानुमायजतामेज्ज्याऽइ
ष÷कृणोतुसोऽअध्वराजातवेदाजुषताᳬंहुविर्होतुर्य्यज ॥४७॥ [७]
देवम्बर्हिःसरस्वतीसुदेवमिन्द्रेऽअश्विना ॥ तेजोनचक्षुरक्ष्योर्ब्बर्हिषा
दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥४८॥ देवीर्द्वार÷ ॥ देवीर्द्वा
रोऽअश्विनाभिषजेन्द्रेसरस्वती ॥ प्राणन्नवीर्य्यन्नसिद्वारोदधुरिन्द्रि
यंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥४९॥ देवीऽउषासौ ॥ देवीऽउषासाव

श्विनासुत्रामेन्द्रेसरस्वती ॥बलन्नवाचमास्यऽउषाभ्यान्दधुरिन्द्रियं
वसुवनेवसुधेयस्यव्यन्तुयज ॥५०॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीसरस्वत्य
श्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्णयोर्यशोजोष्ट्रीभ्यान्दधुरिन्द्रि
यंवसुवनेवसुधेयस्यव्यन्तुयज ॥ ५१ ॥ देवीऽऊर्ज्जाहुती ॥ देवीऽ
ऊर्ज्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्यश्विनाभिषजावतः ॥ शुक्रन्नज्ज्यो
तिस्तनयोराहुतीधत्तऽइन्द्रियम्वसुवनेवसुधेयस्यव्यन्तुयज ॥५२॥
देवादेवानाम् ॥ देवादेवानाम्भिषजाहोताराविन्द्रमश्विना ॥ वषट्

कारैश्सरस्वतीत्विषिन्नहृदयेमतिꣳहोतृभ्यान्दधुरिन्द्रियंवसुवने
वसुधेयस्यव्यन्तुयज ॥५३॥ देवीस्तिस्रः ॥ देवीस्तिस्रास्तिस्रोदेवीर
श्विनेडासरस्वती ॥ शूषन्नमध्येनाभ्यामिन्द्रायदधुरिन्द्रियंवसुवने
वसुधेयस्यव्यन्तुयज ॥५४॥ देवऽइन्द्रः ॥ देवऽइन्द्रोनराशꣳसस्त्रि
वरूथश्सरस्वत्याश्विभ्यामीयतेरथः ॥ रेतोनरूपममृतञ्जनित्रमि
न्द्रायत्वष्टादधदिन्द्रियाणिवसुवनेवसुधेयस्यव्यन्तुयज ॥ ५५ ॥
देवोदेवैः ॥ देवोदेवैर्वनस्पतिर्हिरण्यपर्णोऽअश्विभ्याꣳसरस्व

त्यासुपिप्पलऽइन्द्रायपञ्चयतेमधु । ओजोनजूतिर्ऋषभोनभामंवन
स्पतिर्न्नोदधदिन्द्रियाणिवसुवनेवसुधेयस्यव्यन्तुयज ॥ ५६ ॥ देवम्ब
र्हिः ॥ देवम्बर्हिर्व्वारितीनामध्वरेस्तीर्ण्णमश्विभ्यामूर्णम्म्रदाःसरस्व
त्यास्योनमिन्द्रतेसदः ॥ ईशायैमन्युᳫराजानम्बर्हिषादधुरिन्द्रियं
वसुवनेवसुधेयस्यव्यन्तुयज ॥५७॥ देवोऽअग्निःस्विष्टकृद्देवान्यक्षद्य
थायथᳫ होताराविन्द्रमश्विनावाचावाचᳫ सरस्वतीमग्निᳫसोमᳫ
स्विष्टकृत्स्विष्टऽइन्द्रःसुत्रामासवितावरुणोभिषगिष्टोदेवोवनस्प

तिꣳस्विष्टादेवाऽआज्यपाꣳस्विष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृ
द्यशोनदधदिन्द्रियमूर्जमपचितिꣳस्वधांवसुवनेवसुधेयस्यव्यन्तु
यज ॥ ५८ ॥ अग्निमद्यहोतारमवृणीतायंयजमानःपचन्पक्तीः
पचन्पुरोडाशान्बध्नन्नश्विभ्याञ्छागꣳसरस्वत्यैमेषमिन्द्रायऽ
ऋषभꣳसुन्वन्नश्विभ्याꣳसरस्वत्याऽइन्द्रायसुत्राम्णेसुरासोमा
न्त्सूपस्थाऽअद्य ॥ ५९ ॥ सूपस्थाऽअद्यदेवोवनस्पतिरभवद
श्विभ्याञ्छागेनसरस्वत्यैमेषेणेन्द्रायऽऋषभेणाक्षँस्तान्मेदस्तःप्र

तिंपचुताग्गृंभीषुतावींवृधन्तपुरोडाशैरपुंरश्विनासरंस्वतीन्द्रंःसुत्रा
मांसुरासोमाँस्त्वामुद्य ॥ ६० ॥ त्वामुद्यऽऋषऽआर्षेयऽऋषीणान्न
पादवृणीतायंय्यजमानोबहुभ्यऽ आसङ्गतेभ्यऽएषमेदेवेषुवसु
वार्य्यायंक्ष्यतऽइतितायादेवादेवदानान्यदुस्तान्यस्म्माऽआचशा
स्साचंगुरस्वेषितश्चहोतरसिभद्रवाच्याययुप्प्रेषितोमानुषःसूक्तवाका
यंसूक्ताब्रूहि ॥ ६१ ॥ इतिश्रीवाजसेनयसंहितायांएकविंशोऽध्यायः
॥ २१ ॥ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ तेजोसिपंचा

ग्नयएकाहिंकारायद्वेतत्सवितुर्द्दशविभूर्मात्रैकाकायद्वेआग्नहँस्त्रयो
दशशेपादेकैकोनविंशतिश्चतुस्त्रिंशत् ॥ हरिःॐतेजोसिशुक्रम
मृतमायुष्पाऽआयुर्म्मेपाहि ॥ देवस्यत्वासवितुःप्रसवेऽश्विनोर्ब्बा
हुभ्याम्पूष्णोहस्ताभ्यामाददे ॥ १ ॥ इमामगृभ्णन् ॥ इमाम
गृभ्णन्नशनामृतस्यपूर्व्वऽआयुषिविदथेषुकव्या ॥ सानोऽअस्मि
न्त्सुतऽआबभूवऽऋतस्यसामन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअ
सि ॥ अभिधाऽअसिभुवनमसियन्तासिधर्त्ता ॥ सत्वमग्निंवैश्वान

रꣳसम्प्रथसङ्गच्छस्वाहाकृतꣳ ॥ ३ ॥ स्वगात्वा ॥ देवेभ्यः प्रजापते
येब्रह्मन्नश्वम्भन्त्स्यामिदेवेभ्यः प्रजापतयेतेनराध्यासम् ॥ तम्ब
धानदेवेभ्यः प्रजापतयेतेनराध्नुहि ॥ ४ ॥ प्रजापतयेत्वा ॥ प्रजाप
तयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वाजुष्टम्प्रोक्षामिवायवेत्वाजुष्ट
म्प्रोक्षामिविश्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रोक्षामिसर्वेभ्यस्त्वादेवे
भ्योजुष्टम्प्रोक्षामि ॥ योऽअर्वन्तञ्जिघांꣳसतितमभ्यमीतिवरुणः
परोमर्त्तः परःश्वा ॥ ५ ॥ [५] अग्नयेस्वाहा ॥ अग्नयेस्वाहासोमा

यस्वाहापाम्मोदायस्वाहासवित्रेस्वाहावायवेस्वाहाविष्णवेस्वाहेन्द्रा
यस्वाहाबृहस्प्पतयेस्वाहामित्रायस्वाहावरुणायस्वाहा ॥ ६ ॥ [१] ॥ २२ ॥
हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रन्दतेस्वाहावक्र
न्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्प्रोथायस्वाहागन्धायस्वाहाग्घ्राताय
स्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दितायस्वाहाब्वल्गतेस्वाहा
सीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्ग्रतेस्वाहाकूजतेस्वा ॥ १४ ॥
हाप्प्रबुद्धायस्वाहाब्विजृम्भमाणायस्वाहाब्विचृतायस्वाहासꣳहाना

यस्वाहोपस्थिताय स्वाहायनाय स्वाहाऽऽयणाय स्वाहा ॥७॥ यते
स्वाहा ॥ यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूका
राय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा जवाय
स्वाहा बलाय स्वाहा विवर्त्तमानाय स्वाहा विवृत्ताय स्वाहा विधून्वा
नाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहेक्षमा
णाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा यदत्ति
तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रं करोति तस्मै स्वाहा कु

वृतेस्वाहाकृतायुस्वाहा ॥ ८॥ [२] तत्सवितुः ॥ तत्सवितुर्व्वरेण्ण्यु
म्भर्ग्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ९ ॥ हिरण्ण्य ॥ २२ ॥
पाणिमूतये सवितारमुपह्वये ॥ सचेत्तादेवतापदम् ॥ १० ॥ देव
स्यचेततः ॥ देवस्यचेततोमहीम्प्रसवितुर्हवामहे ॥ सुमतिꣳसत्य
राधसम् ॥ ११ ॥ सुष्टुतिꣳसुमतीवृधः ॥ सुष्टुतिꣳसुमतीवृधोरा
तिꣳसवितुरीमहे ॥ प्रदेवायमतीविदे ॥ १२ ॥ रातिꣳसत्पतिम् ॥ ॥ १५ ॥
रातिꣳसत्पतिम्महेसवितारमुपह्वये ॥ आसवन्देववीतये ॥ १३ ॥

देवस्यसवितुः ॥ देवस्यसवितुर्म्मतिमासवंविश्वदेव्यम् ॥ धियाभ
गम्मनामहे ॥ १४ ॥ अग्निँस्तोमेन । बोधयसमिधानोऽअमर्त्यं
म् ॥ हव्यादेवेषुनोदधत् ॥ १५ ॥ सहव्यवाट् ॥ सहव्यवाडमर्त्यऽ
उशिग्दूतश्चनोहितः ॥ अग्निर्द्धियासमृण्वति ॥ १६ ॥ अग्निन्दू
तम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२आसादयादिह ॥ १७ ॥ अजी
जनोहिपवमानसूर्य्यंविधारेशक्मनापयः ॥ गोजीरयारँहमाणः
पुरन्ध्या ॥ १८ ॥ [९] विभूर्म्मात्रा । प्रभूःपित्राश्वोसिहयोस्य

त्वोसिमयोस्यर्वासिसप्तिरसिवाज्यसिवृषासिनृमणाऽअसि ॥ ययु
र्न्नामासिशिशुर्न्नामास्यादित्यानाम्पत्वान्विहि ॥ देवाऽआशापाला
ऽएतन्देवेभ्योश्वम्मेधायप्प्रोक्षितꣳरक्षत ॥ इहरन्तिरिहरमतामिह
धृतिरिहस्वधृतिःस्वाहा ॥ १९ ॥ [ २ ] कायस्वाहा ॥ कायस्वाहा
कस्मैस्वाहाकतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनःप्प्र
जापतयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यै ॥ १६ ॥
सुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यै

बृहत्यैस्वाहापूष्णेस्वाहापूष्णेप्रपथ्यायस्वाहापूष्णेनरन्धिषाय
स्वाहात्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपायस्वाहाविष्णवे
स्वाहाविष्णवेनिभूयपायस्वाहाविष्णवेशिपिविष्टायस्वाहा ॥ २० ॥
विश्वोदेवस्य । नेतुर्म्मर्त्तोवुरीतसख्यम् । विश्वोरायऽइषुध्यतिद्युम्नं
वृणीतपुष्यसेस्वाहा ॥ २१ ॥ [ १ ] आब्रह्मन् ॥ आब्रह्मन्ब्राह्म
णोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहा
रथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिःपुरन्धिर्योषा

जिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनि
कामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमो
नःकल्पताम् ॥ २२ ॥ [ १ ] प्राणायस्वाहा । ऽपानायस्वाहाव्या
नायस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वाहावाचेस्वाहामनसेस्वाहा ॥
॥ २३ ॥ [१] प्राच्यैदिशे । स्वाहार्वाच्यैदिशेस्वाहादक्षिणायैदि
शेस्वाहार्वाच्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोदी
च्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वाहार्वाच्यैदिशेस्वाहा

र्ध्वायैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २४ ॥ [१] अद्भ्यःस्वाहावा
र्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वाहास्रवन्तीभ्यःस्वाहा
स्यन्दमानाभ्यःस्वाहाकूप्याभ्यःस्वाहासूद्याभ्यःस्वाहाधा
र्याभ्यःस्वाहार्णवायस्वाहासमुद्रायस्वाहासरिरायस्वाहा २५
[१] वातायस्वाहा। धूमायस्वाहाभ्रायस्वाहामेघायस्वाहाविद्यो
तमानायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वाहाववर्षते
स्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीतायस्वाहा

प्प्रुष्णतेस्वाहांशीकायतेस्वाहाप्प्रुष्वाभ्युःस्वाहाह्रादुनीभ्युः
स्वाहांनीहारायस्वाहा ॥ २६ ॥ [ १ ] अग्नयेस्वाहा ॥ अग्नयेस्वाहा
सोमायस्वाहेन्द्रायस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहा दिवेस्वाहा
दिग्भ्युःस्वाहाशाभ्युःस्वाहोर्व्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा
॥ २७ ॥ [ १ ] नक्षत्रेभ्युःस्वाहा ॥ नक्षत्रियेभ्युःस्वाहाहोरात्रे
भ्युःस्वाहार्द्धमासेभ्युःस्वाहामासेभ्युःस्वाहाऋतुभ्युःस्वाहार्तवे
भ्युःस्वाहासंवत्सरायस्वाहाद्यावापृथिवीभ्याᳪस्वाहाचन्द्रायस्वा

संहि. हासरीसृपेभ्यःस्वाहा ॥२९॥ [१] असवेस्वाहा ॥ असवेस्वाहावसवे उ. अ.
॥ ३३ ॥ स्वाहाविभुवेस्वाहाविवस्वतेस्वाहागणश्रियेस्वाहागणपतयेस्वाहाभि ॥ २२ ॥
भुवेस्वाहाधिपतयेस्वाहाशूषायस्वाहासꣳसर्प्पायस्वाहाचन्द्रायस्वा
हाज्योतिषेस्वाहामलिम्लुचायस्वाहादिवापतयतेस्वाहा ॥ ३० ॥
[१] मधवेस्वाहा ॥ मधवेस्वाहामाधवायस्वाहाशुक्रायस्वाहाशुचये
स्वाहानभसेस्वाहानभस्यायस्वाहेषायस्वाहोर्ज्जायस्वाहासहसेस्वाहा ॥ १९ ॥
सहस्यायस्वाहातपसेस्वाहातपस्यायस्वाहाꣳहसस्पतयेस्वाहा ॥३१॥

[१] वाजा॑य॒स्वाहा॑ । प्प्रस॒वाय॒स्वाहा॑पि॒जाय॒स्वाहा॒क्रत॑वे॒स्वाहा॒स्व॒÷
स्वाहा॑मू॒र्द्ध्नेस्वाहा॑व्यश्नु॒विने॒स्वाहान्त्या॑य॒स्वाहान्त्या॑यभौव॒नाय॒
स्वाहा॒भुव॑नस्य॒पत॑ये॒स्वाहाधि॑पतये॒स्वाहा॑प्प्र॒जाप॑तये॒स्वाहा॑ ॥ ३२ ॥
[१] आयु॑र्य॒ज्ञेन॑ । कल्पता॒ꣳस्वाहा॑प्प्रा॒णोय॒ज्ञेन॑कल्पता॒ꣳस्वाहा॑
पा॒नोय॒ज्ञेन॑कल्पता॒ꣳस्वाहा॑व्या॒नोय॒ज्ञेन॑कल्पता॒ꣳस्वाहो॑दा॒नोय॒
ज्ञेन॑कल्पता॒ꣳस्वाहा॑समा॒नोय॒ज्ञेन॑कल्पता॒ꣳस्वाहा॒चक्षु॑र्य॒ज्ञेन॑
कल्पता॒ꣳस्वाहा॒श्श्रोत्रं॑य॒ज्ञेन॑कल्पता॒ꣳस्वाहा॒वाग्य॒ज्ञेन॑कल्प

ताᳬंस्वाहामनोयज्ञेनंकल्पताᳬंस्वाहात्मायज्ञेनंकल्पताᳬंस्वा
हाब्रह्मायज्ञेनंकल्पताᳬंस्वाहाज्योतिर्यज्ञेनंकल्पताᳬंस्वाहास्व
र्यज्ञेनंकल्पताᳬंस्वाहापृष्ठंयज्ञेनंकल्पताᳬंस्वाहायज्ञोयज्ञेनंक
ल्पताᳬंस्वाहा ॥ ३३ ॥ एकस्मैस्वाहाद्वाभ्याᳬंस्वाहाशतायस्वाहै
केशतायस्वाहाव्युष्ट्यैस्वाहास्वर्गायस्वाहा ॥ ३४ ॥ [ १ ] इतिश्री
वाजसनेयसंहितायांद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ हिरण्यगर्भोयःप्राणतोद्वि

कौयुजंत्यष्टौवायुश्चापंचप्राणायतिस्त्रउत्सक्क्थ्याद्वादशगायत्री
स्त्वाषट्पौकःस्विदष्टौकास्विद्दशसुभूःस्वयंभूस्तिस्त्रएकादशपंचष
ष्टिः ॥ हरिःॐ हिरण्यगर्भेःसम ॥ हिरण्यगर्भःसमवर्त्तताग्ग्रे
भूतस्यंजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै
देवायहविषाविधेम ॥१॥ उपयामगृहीतोसि । प्रजापतयेत्वाजुष्टं
गृह्णाम्म्येषतेयोनिःसूर्य्यस्तेमहिमा ॥ यस्तेहन्त्संवत्सरेमहिमासं
म्बभूवयस्तेवायावन्तरिक्षेमहिमासम्बभूवयस्तेदिविसूर्य्येमहिमा

म्परितस्त्थुषंः ॥ रोचन्तेरोचनादिवि ॥ ५ ॥ युञ्जन्त्यस्य ॥ युञ्ज
न्त्यस्यकाम्म्याहरीव्विपक्षसारथें ॥ शोणाधृष्ण्णूनृवाहसा ॥ ६ ॥
यद्वातंः ॥ यद्वातोऽअपोऽअगनीगन्प्रियामिन्द्रस्यतन्न्वम् ॥ एतं
स्तोतरनेनपथापुनरश्श्वमावर्त्तयासिनः ॥ ७ ॥ व्वसवस्त्वा । ञ्जन्तु
गायत्त्रेणच्छन्दसारुद्रास्त्वाञ्जन्तुत्त्रैष्टुभेनच्छन्दसादित्यास्त्वाञ्ज
न्तुजागतेनच्छन्दसा ॥ भूर्भुवःस्वल्लाजी ३ च्छाँची ३ व्व्यव्व्येग
व्व्यंऽएतदन्नमत्तदेवाऽएतदन्नमद्धिप्प्रजापते ॥ ८ ॥ कःस्वित् ॥ कः

स्विदेकाकीचरतिकऽउंस्विज्जायतेपुनः ॥ किꣳस्विद्धिमस्यभेषज
ङ्किम्म्वावपनम्महत् ॥ ९ ॥ सूर्य्यऽएकाकी । चरतिचन्द्रमाजाय
तेपुनः ॥ अग्निर्हिमस्यभेषजम्भूमिरावपनम्महत् ॥ १० ॥ का
स्वित् ॥ कास्विदासीत्पूर्वचित्तिःकिꣳस्विदासीद्बृहद्वयः ॥ कास्वि
दासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ११ ॥ द्यौरासीत् ॥
द्यौरासीत्पूर्वचित्तिरश्वऽआसीद्बृहद्वयः ॥ अविरासीत्पिलिप्पिला ॥ २२ ॥
रात्रिरासीत्पिशङ्गिला ॥ १२ ॥ [८] वायुष्ट्वा । पचतैरवत्वासितग्री

वृश्च्छागैर्न्यग्रोधश्चमसैःशाल्मलिर्वृद्ध्या ॥ एषस्यराथ्योवृषापड्भि
श्चतुर्भिरेदगन्ब्रह्माकृष्णश्चनोवतुनमोग्नये ॥ १३ ॥ संशितो
रश्मिना । रथःसंशितोरश्मिनाहयः ॥ संशितोऽअप्स्वप्सु
जाब्रह्मासोमपुरोगवः ॥ १४ ॥ स्वयंवाजिन् ॥ स्वयंवाजिंस्तन्वंकल्प
यस्वस्वयंयजस्वस्वयञ्जुषस्व ॥ महिमातेन्येननसन्नशे ॥ १५ ॥ नवै ॥
नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाँ २ ऽइदेषिपथिभिःसुगेभिः
यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसवितादधातु ॥ १६ ॥ अग्निः

॥ २४ ॥ का ॥ २२ ॥ यकासकौ । शकुन्तकऽआहलगिति वञ्चति ॥ विवक्षत
तऽइव ते मुखमध्वर्यो मा नस्त्वमभिभाषथाः ॥ २३ ॥ माता च ते ॥ २३ ॥
पिता च तेऽग्रं वृक्षस्य रोहतः ॥ प्रतिलामीति ते पिता गभे मुष्टिमतꣳसय
त् ॥ २४ ॥ माता च ते पिता च तेऽग्रं वृक्षस्य क्रीडतः ॥ विवक्षतऽ
इव ते मुखं ब्रह्मन्मा त्वं वदो बहु ॥ २५ ॥ ऊर्ध्वामेनाम् ॥ ऊर्ध्वामेना
मुच्छ्रापय गिरौ भारꣳ हरन्निव ॥ अथास्यै मध्यमेधताꣳ शीते वाते पुन ॥ २४ ॥
न्निव ॥ २६ ॥ ऊर्ध्वमेनम् ॥ ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निव ॥

अथास्यमद्ध्यमेजतुशीतेवातेपुनन्निव ॥ २७ ॥ यदस्या० ॥ यदस्याऽ
अꣳहुभेद्याꣳकृधुस्थूलमुपातसत् ॥ मुष्काविदस्याऽएजतोगोशफेशकुलाविव ॥ २८ ॥ यद्देवास० ॥ यद्देवासोललामंगुम्प्राविष्टीमिनमाविषुः ॥ सक्थ्नादेदिश्यतेनारीसत्यस्याक्षिभुवोयथा ॥ २९ ॥ यद्धरिण० ॥ यद्धरिणोयवमत्तिनपुष्टम्पशुमन्यते ॥ शूद्रायदर्य्यजारान पोषायधनायति ॥ ३० ॥ यद्धरिणोयवमत्तिनपुष्टम्बहुमन्यते । शूद्रोयदर्य्यायैजारोनपोषमनुमन्यते ॥ ३१ ॥ दधिक्राव्णोऽअका

संहि. रिषञ्जिष्णोऽरश्श्वंस्यवाजिनं÷ ॥ सुरभिनोमुखाकरत्प्रणऽआयूंᳪषि उ. अ.
॥ २५ ॥ तारिपत् ॥ ३२ ॥ [१२] गायत्रीत्रिष्टुप् ॥ गायत्रीत्रिष्टुब्ब्जगत्य ॥ २३ ॥
नुष्टुप्पङ्क्त्यासह॥बृहत्युष्ष्णिहाकुकुप्प्सुचीभिं÷शम्म्यन्तुत्वा॥३३॥
द्विपदायाश्श्च ॥ द्विपदायाश्श्चतुष्ष्पदास्त्रिपदायाश्श्चषट्पदाः ॥ विच्छ
न्दायाश्श्चसच्छन्दाःसुचीभिं÷शम्म्यन्तुत्वा ॥ ३४ ॥ महानाम्म्न्यो
रेवत्यं÷ ॥ महानाम्म्न्योरेवत्योविश्श्वाऽआशाः प्प्रभूवरीः ॥ मैघी ॥ २५ ॥
र्विद्युतोवाचं÷सुचीभिं÷शम्म्यन्तुत्वा ॥ ३५ ॥ नाड्यैस्तेपत्न्योलो

मुविचिंस्वन्तुमनीषया ॥ देवानाम्पत्न्योदिशं॑सूचीभिं॑शम्म्य
न्तुत्वा ॥ ३६ ॥ रजताहरिणीः । सीसायुजोयुज्यन्तेकर्मभिः ॥
अश्वस्यवाजिनंस्त्वचिसिमांशम्म्यन्तुशम्म्यन्तीः ॥ ३७ ॥ कुवि
दङ्ग । यवंमन्तोयवंश्चिद्यथादान्त्यनुपूर्वंव्वियूय ॥ इहेहैषाङ्कृणुहि
भोजनानियेबर्हिषोनमउक्तिंय्यजन्ति ॥ ३८ ॥ [८] कस्त्वा ॥
कस्त्वाछ्यतिकस्त्वाविशास्तिकस्तेगात्राणिशम्म्यति ॥ कउतेशमि
ताकविः ॥ ३९ ॥ ऋतवस्ते ॥ ऋतवस्तऽऋतुथापर्वंशमितारोविशा

देवसखुयदित्वमत्रमनंसाजगन्थं ॥ येषुविष्ष्णुस्त्रिषुपदेष्ष्वेष्टुस्ते
पुविश्श्वम्भुवनमाविवेशाँ३ ॥ ४९ ॥ अपितेषु ॥ त्रिषुपदेष्ष्वस्स्मिये
पुविश्श्वम्भुवनमाविवेशं ॥ सद्यश्पर्य्यैमिपृथिवीमुतद्यामेकुनाङ्गेन
दिवोऽअस्यपृष्ठम् ॥५०॥ केष्ष्वन्तः ॥ पुरुषऽआविवेशकान्न्यन्तः
पुरुषेऽअर्प्पितानि ॥ एतद्ब्रह्मन्नुपवल्हामासित्वाकिᳪस्विन्नःप्रति
वोचास्यत्र ॥ ५१ ॥ पञ्चस्वन्तः । पुरुषऽआविवेशतान्न्यन्तश्पुरु
षेऽअर्प्पितानि ॥ एतत्त्वात्रप्रतिमन्वानोऽअस्मिन्नमाययाभव

स्युत्तरोमत् ॥ ५२ ॥ [ ८ ] कास्वित् ॥ कास्विदासीत्पूर्व्वचित्तिः
किᳩस्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिलाकास्विदासी
त्पिशङ्गिला ॥ ५३ ॥ द्यौरासीत् ॥ द्यौरासीत्पूर्व्वचित्तिरश्वऽआसी
द्बृहद्वयः ॥ अविरासीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला ॥५४॥
काऽईम् ॥ काऽईमरेपिशङ्गिलाकाऽईङ्कुरुपिशङ्गिला ॥ कईमा
स्कन्दमर्षतिकऽईम्पन्थांविसर्प्पति ॥ ५५ ॥ अजारे । पिशङ्गिला
श्वावित्कुरुपिशङ्गिला ॥ शशऽआस्कन्दमर्षत्यहिᳩपन्थांविसर्प्प

ति ॥ ५६ ॥ कत्यंस्य । विष्ठाःकत्यक्षराणिकतिहोमासःकतिधा
समिद्धः ॥ यज्ञस्यंत्वाविदथापृच्छमत्रकतिहोतारऽऋतुशोयज
न्ति ॥ ५७ ॥ षडस्य ॥ विष्ठाःशतमक्षराण्यशीतिर्होमाःसमिधो
हतिस्रः ॥ यज्ञस्यतेविदथाप्प्रब्रवीमिसप्तहोतारऽऋतुशोयजन्ति
॥ ५८ ॥ कोऽअस्य । वेदभुवनस्यनाभिङ्कोद्यावापृथिवीऽअन्तरि
क्षम् ॥ कःसूर्य्यस्यवेदबृहतोजनित्रङ्कोवेदचन्द्रमसंय्यतोजाः ॥ ॥ २८ ॥
॥ ५९ ॥ वेदाहम् ॥ वेदाहमस्यभुवनस्यनाभिंवेदद्यावापृथिवीऽ

अन्तरिक्षम् ॥ वेदसूर्य्यस्यबृहतोजनित्रमथोवेदचन्द्रमसंय्यतो
जाः ॥ ६० ॥ पृच्छामित्वा ॥ पृच्छामित्वापरमन्तम्पृथिव्याःपृ
च्छामियत्रभुवनस्यनाभिः ॥ पृच्छामित्वावृष्णोऽअश्वस्यरेतः
पृच्छामिवाचःपरमंव्योम ॥ ६१ ॥ इयंवेदिः ॥ इयंवेदिःपरो
अन्तः पृथिव्याऽअयंय्यज्ञोभुवनस्यनाभिः ॥ अय६सोमोवृ
ष्णोऽअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥ ६२ ॥ [१०] सुभूः
स्वयम्भूः । प्रथमोन्तर्म्महत्यर्णवे ॥ दधेहगर्भमृत्वियंय्यतोजा

तश्प्रजापतिः ॥ ६३ ॥ होतायक्षत् ॥ होतायक्षत्प्रजापतिꣳसोमं
स्यमहिम्नश् ॥ जुषताम्पिबतुसोमꣳहोतर्य्यज ॥ ६४ ॥ प्रजापतेन ।
त्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्त
न्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् ॥ ६५ ॥ [३] इतिश्रीवाजस
नेयसंहितायांत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाक्सूत्रम् ॥ अश्वस्तूपरोधूम्रान्वसंतायसमुद्रायशिशुमारान्म ॥ २९ ॥
युःप्राजापत्योदशकाश्चत्वारश्चत्वारिꣳशत् ॥ हरिःॐअश्वस्तूपरः ॥

अश्वस्तूपरोगोमृगस्तेप्प्राजापत्याःकृष्णग्ग्रीवऽआग्नेयोररराटेपुर
स्तात्सारस्वतीमेष्ष्यधस्ताद्धन्न्वोराश्विनावधोरामौबाह्वोःसौमापौ
ष्ष्णःश्यामोनाभ्यांसौर्य्ययामौश्वेतश्चकृष्णश्चपार्श्वयोस्त्वा
ष्ट्रौलोमशसक्थौसक्थ्योर्व्वायव्यः श्वेतःपुच्छऽइन्द्रायस्वपस्यायवे
हद्वैष्णवोवामनः ॥ १ ॥ रोहितोधूम्म्ररोहितः ॥ कर्क्कन्धुरोहितस्ते
सौम्म्याबब्भ्रुररुणबब्भ्रुःशुकबब्भ्रुस्तेव्वारुणाःशितिरन्ध्रोन्न्यतः शि
तिरन्ध्रःसमन्तशितिरन्ध्रस्तेसावित्राःशितिबाहुरन्न्यतः शितिबा

हुं समन्तशितिबाहुस्तेबार्हस्पत्याःपृषतीक्षुद्रपृषतीस्त्थूलपृषती
तामैत्रावरुण्ण्यः॥२॥शुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्वि
नाः श्येतःश्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्ण्णायामाऽअवलि
प्तारौद्रानभोरूपाःपार्ज्जन्न्याः॥ ३ ॥ पृश्निस्तिरश्चीनपृश्निः ॥ पृश्नि
स्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्तेमारुताःफल्गूर्ल्लोहितोर्णीपलक्षीताःसा
रस्वत्यःप्लीहाकर्ण्णःशुण्ठाकर्ण्णोद्ध्यालोहकर्ण्णस्तेत्वाष्ट्राःकृ ॥ ३० ॥
ष्णग्रीवःशितिकक्षोञ्जिसक्थस्तऽऐन्द्राग्न्नाःकृष्णाञ्जिरल्पाञ्जि

र्म्महाज्ञिस्तऽउंपस्याः ॥ ४ ॥ शिल्पावैश्वदेव्यः ॥ शिल्पावैश्वदे
व्योरोहिण्यस्त्र्यवयोवाचेविज्ञाताऽ अदित्यैसरूपाधात्रेवत्सतर्यो
देवानाम्पत्नीभ्यः ॥५॥ कृष्णग्रीवाआग्नेयाः । शितिभ्रवोवसू
नाꣳरोहितारुद्राणाꣳश्वेताऽअवरोकिणऽ आदित्यानान्नभोरूपाः
पार्ज्जन्याः ॥ ६ ॥ उन्नतऽऋषभः ॥ उन्नतऽऋषभोवामनस्तऽऐन्द्रा
वैष्णवाऽउन्नतःशितिबाहुः शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्याःशु
केरूपावाजिनाःकल्माषाऽआग्निमारुताःश्यामाःपौष्णाः ॥

॥ ७ ॥ एतांऽऐन्द्राग्नाः ॥ एतांऽऐन्द्राग्नाद्विरूपाऽअंग्नीषोमी
यांवामनाऽअंनड्वाहंऽ आग्नावैष्णवावशामैत्रावरुण्योन्यतंऽए
न्योमैत्र्यः ॥ ८ ॥ कृष्णग्रीवाऽआग्नेयाः ॥ कृष्णग्रीवाऽआ
ग्नेयाबभ्रवः सौम्याःश्वेतावायव्याऽ अविंज्ञाताऽअदित्यैसरू
पाधात्रेवत्सतर्यौदेवानाम्पत्नीभ्यः ॥ ९ ॥ कृष्णाभौमाः ॥
कृष्णाभौमाधूम्राआन्तरिक्षाबृहन्तौदिव्याः शबलावैद्युताःसि
ध्मास्तारकाः ॥ १० ॥ [१०] धूम्रान्वसन्ताय ॥ धूम्रान्वस

न्तायालभंतेश्वेतान्ग्रीष्मायकृष्णान्वर्षाभ्योऽरुणाञ्छरदेपृषंतो
हेमन्तायपिशङ्गाञ्छिशिराय॥११॥त्र्यवयोगायत्र्यै। पञ्चावयस्त्रि
ष्टुभेदित्यवाहोजगत्यैत्रिवत्साऽअनुष्टुभेतुर्य्यवाहऽउष्णिहे॥१२॥
पष्ठवाहौविराजे॥ पष्ठवाहौविराजऽउक्षाणौबृहत्याऽऋषभाःककु
भेनड्वाहःपङ्क्त्यैधेनवोतिच्छन्दसे॥१३॥ कृष्णग्रीवाऽआग्नेयाः॥
कृष्णग्रीवाऽआग्नेयाबभ्रवःसौम्म्याऽउपध्वस्ताःसावित्रावत्स
तर्य्यःसारस्वत्यःश्यामाःपौष्णाःपृश्नयोमारुताबहुरूपावैश्वदे

वाव्रुशाद्यांवापृथिवीयांः॥१४॥उक्षाःसंब्रुराः॥ उक्षाःसंब्रुराऽएता
ऽऐन्द्राग्नाःकृष्णावारुणाःपृश्नयोमारुताःकायास्तूपराः ॥ १५ ॥
अग्नयेनीकवतेप्रथमजानालभतेमरुद्भ्यःसान्तपनेभ्यःसवात्या
न्मरुद्भ्योगृहमेधिभ्योबष्किहान्मरुद्भ्यःक्रीडिभ्यःसᳮसृष्टान्म
रुद्भ्यःस्वतवद्भ्योनुसृष्टान् ॥ १६ ॥ उक्षाःसंब्रुराः ॥ उक्षाःसंब्रुराऽए
ताऐन्द्राग्नाःप्राशृङ्गामाहेन्द्राबहुरूपावैश्वकर्म्मणाः ॥ १७ ॥ धू
म्राबभ्रुनीकाशाः ॥ पितॄणाᳮसोमवताम्बभ्रवोधूम्रनीकाशाः

पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥ १८ ॥ उत्क्राः संज्ञराः ॥ उत्क्राः संज्ञराऽ एताः शुनासीरीयाः श्वेता वायव्याः श्वेताः सौर्याः ॥ १९ ॥ वसन्ताय कपिञ्जलान् ॥ वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीञ्छरदे वर्तिका हेमन्ताय ककराञ्छिशिराय विकंकरान् ॥ २० ॥ [१०] समुद्राय शिशुमारान् ॥ समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान्मित्राय कुलीपयान्वरु

णायनाक्रान् ॥ २१ ॥ सोमायहंसान् ॥ सोमायहंसानालभतेवा
यवेबलाकाऽइन्द्राग्निभ्याङ्क्रुञ्चान्मित्रायमद्गून्वरुणायचक्रवाका
न् ॥२२॥ अग्नयेकुटरून् ॥ अग्नयेकुटरूनालभतेवनस्पतिभ्यऽ
उलूकानग्नीषोमाभ्याञ्चाषानश्विभ्याम्मयूरान्मित्रावरुणाभ्या
ङ्कपोतान् ॥२३॥ सोमायलबान् ॥ सोमायलबानालभतेत्वष्ट्रेकौली
कान्गोषादीर्देवानाम्पत्नीभ्यः कुलीकादेवजामिभ्योग्नयेगृहप ॥ ३३
तयेपारुष्णान् ॥ २४॥ अह्नेपारावतान् ॥ अह्नेपारावतानालभते

रात्र्यैसीचापूरंहोरात्रयोः सन्धिभ्योजतून्मासेभ्योदात्यौहान्त्सं
वत्सरायमहतःसुपर्णान् ॥ २५ ॥ भूम्म्यांऽआखून् ॥ भूम्म्यांऽआ
खूनालभतेन्तरिक्षायपाङ्क्तान्दिवेकशान्दिग्भ्योनकुलान्बभ्रुकान
वान्तरदिशाभ्यः ॥ २६ ॥ वसुभ्यऽऋश्यान् ॥ वसुभ्यऽऋश्या
नालभतेरुद्रेभ्योरुरूनादित्येभ्योन्यङ्कून्विश्वेभ्योदेवेभ्यःपृ
षतान्त्साध्येभ्यःकुलुङ्गान् ॥ २७ ॥ ईशानायपरस्वतः ॥ ईशाना
यपरस्वतऽआलभतेमित्रायगौरान्वरुणायमहिषान्बृहस्पतयेगव

 यॉंस्त्वष्ट्रऽउष्ट्रान् ॥ २८ ॥ प्रजापतयेपुरुषान् ॥ प्रजापतयेपुरुषान्हस्ति 
॥ ३४ ॥ स्तिनऽआलभतेवाचेप्लुषीँश्चक्षुषेमशकाञ्छ्रोत्रायभृङ्गाः ॥ २९ ॥ ॥ २४ ॥
शतम् ॥ १४०० ॥ प्रजापतयेच । वायवेचगोमृगोवरुणायारण्यो
मेषोयमायकृष्णोमनुष्यराजायमर्कटः शार्दूलायरोहिदृषभाय
गवयीक्षिप्रश्येनायवर्तिकानीलङ्गोःक्रिमिःसमुद्रायशिशुमारोहि
मवतेहस्ती ॥ ३० ॥ [१०] मयुःप्राजापत्यः ॥ मयुःप्राजापत्यऽ ॥ ३४ ॥
उलोहलिक्ष्णोवृषदंशस्तेधात्रेदिशाङ्कङ्कोधुङ्क्षाग्नेयीकलविङ्कोलो

हिताहिःपुंष्करसादस्तेत्वाष्ट्राव्वाचेक्रुञ्चं÷॥३१॥ सोमायकुलुङ्गः॥
सोमायकुलुङ्गऽआरण्योजोनकुलःशाकातेपौष्णाःक्रोष्टामायोरि
न्द्रस्यगौरमृगःपिद्वोन्यङ्कु÷ कक्कटस्तेनुमत्यैप्प्रतिश्रुत्कायैचक्रवा
कः॥३२॥ सौरीबलाका॥ शार्गःसृञ्जयःशयाण्डकस्तेमैत्राःसरस्व
त्यैशारिः÷पुरुषवाक्श्वाविद्भौमीशार्दूलोवृकःपृदाकुस्तेमन्यवेसरस्व
तेशुकं÷पुरुषवाक् ॥ ३३ ॥ सुपर्णःपार्ज्जन्यः ॥ सुपर्णःपार्ज्जन्यऽ
आतिर्वाहसोदर्विदातेवायवेबृहस्पतयेवाचस्पतयेपैङ्गराजोलजऽ

 

आन्तरिक्षः प्लुवोमद्गुर्म्मत्स्युस्तेनदीपतयेद्यावापृथिवीयः कूर्म्मः
॥ ३५ ॥ ॥ ३४ ॥ पुरुषमृगश्चन्द्रमसः ॥ पुरुषमृगश्चन्द्रमसोगोधाकालकादा ॥ २४ ॥
र्व्वाघाटस्तेवनस्पतीनाङ्कृकवाकुः सावित्रोहुंसोवातस्यनाक्रोमकर
दंकुलीपयस्तेकूपारस्यान्हियैशल्यकः॥ ३५ ॥ एण्ण्यन्हः ॥ एण्ण्यन्हो
मण्डूकोमूषिकातित्तिरिस्तेसर्प्पाणांल्लोपाशऽआश्विनः कृष्णोरा
त्र्याऽऋक्षोजतूःसुषिलीकातऽइतरजनानाञ्जहकावैष्णवी ॥ ३६ ॥ ॥ २५ ॥
अन्यवापोर्द्धमासानाम् ॥ अन्यवापोर्द्धमासानामृश्योमयूरः सुप

र्णस्तेगान्धर्वाणामपामुद्रोमासाङ्कश्यपौरोहित्कुंद्रूणाचीगोलत्ति
कातेप्सरसांम्मृत्यवेसितः ॥ ३७ ॥ वर्षाहूर्ऋतूनाम् ॥ वर्षाहूर्ऋतु
नामाखुःकशोमान्थालस्तेपितृणाम्बलायाजगरोवसूनाङ्कपिञ्जलः
कपोतऽउलूकःशशस्तेनिर्ऋत्यैवरुणायारण्योमेषः ॥ ३८ ॥ श्वित्रऽ
आदित्यानाम् ॥ श्वित्रऽआदित्यानामुष्ट्रोघृणीवान्वार्ध्रीणसस्तेम
त्याऽअरण्यायसृमरोरुरूरौद्रःक्वयिःकुटरुर्दात्यौहस्तेवाजिनाङ्का
मायपिकः ॥ ३९ ॥ खड्गोवैश्वदेवः । श्वाकृष्णःकर्णोगर्दभस्तरक्षु

स्तेरक्षंसामिन्द्रांयसूकरश्सिꣳहोमारुतः कृकलासश्पिप्पकाशकुनि
स्तेशरव्यायैविश्वेषान्देवानाम्पृषतः ॥ ४० ॥ [ ४ ] इतिश्रीवाजस
नेयसंहितायांचतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाक्सूत्रम् ॥ शादंदद्भिर्नवैकैकाहिरण्यगर्भश्चतस्त्रआनोदशमा
नोमित्रोयदश्वस्याष्टकौयत्तेषडिमानुकंद्वेपञ्चदशसप्तचत्वारिꣳशत्
॥ हरिःॐ शादंन्दुद्भिः ॥ शादंन्दुद्भिरवकान्दन्तमूलैर्म्मृदम्बर्स्वैस्ते ॥ ३६ ॥
गान्दꣳष्ट्राभ्याꣳ सरस्वत्याऽअग्रजिह्वंजिह्वायाऽउत्सादमवक्र

न्देनतालुवाजꣳहनुभ्यामपऽआस्येनवृषणमाण्डाभ्यामादि
त्याँश्मश्रुभिःपन्थानम्भ्रूभ्यान्द्यावापृथिवीवर्तोभ्यांविद्युतङ्क
नीनकाभ्याꣳशुक्लायस्वाहाकृष्णायस्वाहापार्याणिपक्ष्माण्यवा
र्याऽइक्षवोवार्याणिपक्ष्माणिपार्याऽइक्षवः ॥१॥ [१] वातम्प्रा
णेन ॥ वातम्प्राणेनापानेननासिकेऽउपयाममधरेणौष्ठेनसदुत्तरेण
प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्यम्मूर्ध्नास्तनयित्नुन्निर्बाधेना
शनिम्मस्तिष्केणविद्युतङ्कनीनकाभ्याङ्कर्णाभ्याꣳश्रोत्रꣳश्रोत्रा

ऽभ्याङ्कर्णौ तेदुनीमधरकुण्ठेनापꣳ शुष्ककुण्ठेन चित्तम्मन्याभिरदि
तिꣳ शीर्ष्णा निर्ऋतिन्निर्ज्जर्जल्येन शीर्ष्णा संक्रोशैः प्राणान्रेष्माणꣳ स्तुपेन ॥२॥ [१] मशकान्केशैः ॥ मशकान्केशैरिन्द्रꣳ स्वपसा
वहेन बृहस्पतिꣳ शकुनिसादेन कूर्म्माञ्छफैराक्रमणꣳ स्थूराभ्या
मृक्षलाभिः कपिञ्जलाञ्जवञ्जङ्घाभ्यामध्वानम्बाहुभ्याञ्जाम्बीलेना
रण्यमग्निमतिरुग्भ्याम्पूषणन्दोर्भ्यामश्विनावꣳसाभ्याꣳ रुद्र
ꣳ रोराभ्याम् ॥३॥ [१] अग्नेः पक्षतिः ॥ अग्नेः पक्षतिर्वायोर्न्निपक्षति



॥ ३७ ।

रिन्द्रस्यतृतीयासोमस्यचतुर्थ्यदित्यैपञ्चमीन्द्राण्यैषष्ठीमरुताꣳस
प्तमीबृहस्पतेरष्टम्यर्य्यम्णोनवमीधातुर्दशमीन्द्रस्यैकादशीवरु
णस्यद्वादशीयमस्यत्रयोदशी ॥ ४ ॥ [ १ ] इन्द्राग्न्योःपक्षतिःसर
स्वत्यैनिपक्षतिर्म्मित्रस्यतृतीयापाञ्चतुर्थीनिर्ऋत्यैपञ्चम्यग्नीषोम
योःषष्ठीसर्प्पाणाꣳसप्तमीविष्णोरष्टमीपूष्णोनवमीत्वष्टुर्दशमी
न्द्रस्यैकादशीवरुणस्यद्वादशीयम्यैत्रयोदशीद्यावापृथिव्योर्दक्षिण
म्पार्श्वंविश्वेषान्देवानामुत्तरम् ॥ ५ ॥ [ १ ] मरुताꣳस्कन्धाः ॥

मरुताᳪस्कन्धाव्विश्वेषान्देवानाम्प्रथमाकीकसारुद्द्राणान्द्वितीया
दित्यानान्तृतीयाव्वायोः पुच्छमग्नीषोमयोर्भासदौक्रुञ्चौश्रोणि
भ्यामिन्द्राबृहस्पतीऽऊरुभ्याम्मित्रावरुणावल्गाभ्यामाक्रम
णᳪस्थूलाभ्याम्बलङ्कुष्ठाभ्याम् ॥ ६ ॥ [ १ ] पूषणंव्वनिष्ठुना
न्धाहीन्त्स्थूलगुदयासर्प्पान्गुदाभिर्व्विह्रुतऽआन्त्रैरपोवस्तिनावृषणमा
ण्डाभ्यांव्वाजिनᳪशेपेनप्प्रजाᳪरेतसाचाषान्पित्तेनप्प्रदरान्पायु ॥ ३८ ॥
नाकूश्मान्छकपिण्डैः ॥ ७ ॥ [ १ ] इन्द्रस्यक्क्रोडः ॥ इन्द्रस्यक्क्रो

स्येदिन्द्रोवावृधेवृष्ण्यःशवोमदेसुतस्यविष्णवि ॥ अद्यातमस्यम
हिमानमायवोनुष्टुवन्तिपूर्वथा ॥ इमाऽउत्वायस्यायमयःसहस्त्र ॥ ३४ ॥
मूर्द्धऽऊपुर्ण÷ ॥९७॥ [ १३ ] इतिश्रीवाजसनेयसंहितायांत्रयस्त्रिं
शोऽध्यायः ॥ ३३ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ य
ज्जाग्रतःपंचनद्यःसोमोधेनुमाकृष्णोनपूषंतवदशकानतदष्टौषडष्टा
पंचाशत् ॥ हरिःॐ यज्जाग्रतः ॥ यज्जाग्रतोदूरमुदैतिदैवन्तदु ॥ ९४ ॥
सुप्तस्यतथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः÷शिवसङ्क

ल्पमस्तु ॥ १ ॥ येनकर्म्माणि ॥ येनकर्म्माण्यपसोमनीषिणोयज्ञे
कृण्वन्तिविदथेषुधीराः ॥ यदपूर्व्वंयक्षमन्तःप्रजानान्तन्मेमनः
शिवसङ्कल्पमस्तु ॥ २ ॥ यत्प्रज्ञानम् ॥ यत्प्रज्ञानमुतचेतोधृतिश्च
यज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋतेकिञ्चनकर्म्मक्रियते
तन्मेमनःशिवसङ्कल्पमस्तु ॥ ३ ॥ येनेदम् ॥ येनेदम्भूतम्भुवनम्भ
विष्यत्परिगृहीतममृतेनसर्व्वम् ॥ येनयज्ञस्तायतेसप्तहोतातन्मे
मनःशिवसङ्कल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः ॥ यस्मिन्नृचःसाम

संहि. रक्षतन्त्वश्च्यवन्त्व ॥ त्रातातोकस्यतनयेगवामस्यनिमेषथ्रक्षमाणस्त उ. अ.
।९६॥ वव्रते ॥ १३ ॥ उत्तानायामव ॥ भराचिकित्वान्सद्यःप्रवीताव्वृष ॥ ३४ ॥
णञ्जजान ॥ अरुषस्तूपोरुशदस्यपाजऽइडायास्पुत्रोव्वयुनेजनिष्ट
॥ १४ ॥ इडायास्त्वा । पदेव्वयन्नाभापृथिव्याऽअधि ॥ जातवेदोनि
धीमह्यग्नेहव्यायवोढवे ॥ १५ ॥ प्रमन्महे । शवसानायशूषमाङ्गू
षङ्गिर्वणसेऽअङ्गिरस्वत् ॥ सुवृक्तिभिस्तुवतऽऋग्मियायार्चामार्कन्नरे ॥ ९६ ॥
विश्श्रुताय ॥ १६ ॥ प्रवं÷ ॥ प्रवोमहेमहिनमोभरध्वमाङ्गूष्यꣳशव

सानायसामं ॥ येनानुःपूर्वेपितरं÷पदज्ञाऽअर्चन्तोऽअङ्गिरसोगाऽ
अविन्दन् ॥ १७ ॥ इच्छन्तित्वा । सोम्म्यासःसखायःसुन्वन्तिसो
मन्दधतिप्प्रयांᳬसि ॥ तितिक्षन्तेऽअभिशस्तिञ्जनानामिन्द्रत्वदा
कश्चनहिप्प्रकेतः ॥१८॥ नते। दूरेपरमाचिद्रजाᳬस्यातुप्प्रयाहिहरि
वोहरिभ्याम् ॥ स्थिरायवृष्णेसवनाकृतेमायुक्ताग्ग्रावाणः समि
धानेऽअग्नौ ॥ १९॥ अषाढंयुत्सुपृतनासुपप्प्रिᳬस्वर्षामप्सांवृजनं
स्यगोपाम् ॥ भरेषुजाᳬसुक्षितिᳬसुश्रवसञ्जयन्तन्त्वामनुमदेमसो

म ॥२०॥ [१०] सोमोधेनुम् ॥ सोमोधेनुꣳसोमोऽअर्वन्तमाशुꣳसो
मोवीरङ्कर्म्मण्यन्ददाति॥सादन्यंविदथ्यꣳसभेयम्पितृश्रवणंय्यो
ददाशदस्म्मै ॥२१॥ त्वमिमाः ॥ त्वमिमाऽओषधीःसोमविश्वास्त्व
मपोऽअजनयस्त्वङ्गाः ॥ त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषाव्वित
मोववर्त्थ ॥२२॥ देवेनन्नः ॥ देवेनन्नोमनसादेवसोमरायोभागꣳसंह
सावन्नभियुद्ध्य ॥ मात्वातनदीशिषेवीर्य्यस्योभयेभ्यःप्प्रचिकित्सा
गविष्टौ ॥२३॥ अष्टौवि ॥ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्व

योजनासप्तसिन्धून्। हिरण्याक्षःसवितादेवऽआगाद्दधद्रत्नादाशु
षेवार्य्याणि ॥ २४ ॥ हिरण्यपाणिःसविता । विचर्षणिरुभेद्यावापृ
थिवीऽअन्तरीयते ॥ अपामीवाम्बाधतेवेतिसूर्य्यमभिकृष्णेनरज
साद्यामृणोति ॥ २५ ॥ हिरण्यहस्तोऽअसुरः । सुनीथःसुमृडीकः
स्ववाँयात्वर्वाङ् ॥ अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषङ्गृ
णानः ॥ २६ ॥ येते ॥ येतेपन्थाःसवितःपूर्व्यासोरेणवःसुकृताऽअ
न्तरिक्षे ॥ तेभिर्नोऽअद्यपथिभिःसुगेभीरक्षाचनोऽअधिचब्रूहिदेव

॥ २७ ॥ उभापिबतम् ॥ उभापिबतमश्विनोभानःशर्म्मयच्छतम् ॥
अविद्रियाभिरूतिभिः ॥ २८ ॥ अप्नस्वतीमश्विना ॥ अप्नस्वतीम
श्विनावाचमस्म्मेकृतन्नोदस्रावृषणामनीषाम् ॥ अद्यूत्येवसेनिह्वये
वांवृधेचनोभवतंवाजसातौ ॥ २९ ॥ द्युभिरक्तुभिः ॥ द्युभिरक्तुभिः
परिपातमस्म्मानरिष्टेभिरश्विनासौभगेभिः ॥ तन्नोमित्रोवरुणोमा
महन्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥ ३० ॥ [ १० ] आकृष्णे
न । रजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसविता

रथेनादेवोयातिभुवनानिपश्यन् ॥ ३१ ॥ आरात्रि । पार्थिवꣳरजः
पितुरप्प्रायिधामभिः ॥ दिवꣳसदाꣳसिबृहतीवितिष्ठसऽआत्त्वेषंवं
र्त्ततेतमः ॥ ३२ ॥ उषस्तत् ॥ उषस्तच्चित्रमाभरास्म्मभ्यंवाजिनी
वति ॥ येनतोकञ्चतनयञ्चधामहे ॥३३॥ प्रातरग्निम् ॥ प्रातरग्निम्प्रा
तरिन्द्रꣳहवामहेप्प्रातर्म्मित्रावरुणाप्प्रातरश्विना ॥ प्रातर्भगम्पूष
णम्ब्रह्मणस्प्पतिम्प्रातःसोममुतरुद्रꣳहुवेम ॥ ३४ ॥ प्रातर्जितम्भ
गम् ॥ प्रातर्जितम्भगमुग्ग्रꣳहुवेमवयम्पुत्रमदितेर्य्योविधर्त्ता ॥ आ

द्ध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्याह ॥ ३५ ॥ भ
गप्प्रणेतः ॥ भगप्प्रणेतर्भगसत्यराधोभगेमान्धियमुदवाददन्नः ॥
भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तः स्याम ॥ ३६ ॥ उते
दानीम् ॥ उतेदानीम्भगवन्तः स्यामोतप्प्रपित्वऽउतमद्ध्येऽअन्हाम् ॥
उतोदितामघवन्त्सूर्य्यस्यवयन्देवानांᳬसुमतौस्याम ॥ ३७ ॥ भगऽ
एव । भगवाँ२ऽअस्तुदेवास्तेनवयम्भगवन्तः स्याम ॥ तन्त्वाभगस
र्वऽइज्जोहवीतिसनोभगपुरऽएताभवेह ॥ ३८ ॥ समद्ध्वराय ॥ समद्ध्

रायोपसोनमन्तदधिक्क्रावेवशुचयेपदाय ॥ अर्व्वाचीनंव्वसुविदम्भगन्नोरथमिवाश्वावाजिनऽआवहन्तु ॥ ३९ ॥ अश्वावतीर्ग्गोमतीꣳ ॥ अश्वावतीर्ग्गोमतीर्न्नऽउषासोवीरवतीꣳसदमुच्छन्तुभद्राः ॥ घृतन्दुहानाव्विश्वतꣳप्रपीतायूयंपातस्वस्तिभिꣳसदानꣳ ॥ ४० ॥ [ १० ॥ ] पूषन्तव । व्रतेव्वयन्नरिष्ष्येमकदाचन ॥ स्तोतारस्तऽइहस्म्मसि ॥ ॥ ४१ ॥ पथस्प्पथꣳपरिपतिम् ॥ पथस्प्पथꣳपरिपतिंव्वचस्याकामेन कृतोऽअभ्यानडर्कम् ॥ सनोरासच्छुरुधश्चन्द्राग्ग्राधियन्धियꣳ

सीषधातिष्ष्वपुषा ॥ ४२ ॥ त्रीणिपदाव्विचक्रमेव्विष्णुर्ग्गोपाऽअदा
ब्भ्यः ॥ अतोधर्म्माणिधारयन् ॥ ४३ ॥ तद्विप्प्रासः ॥ तद्विप्प्रासो
विपन्न्यवोजागृवाꣳसः समिन्धते ॥ व्विष्णोर्य्यत्परमम्पदम् ॥४४॥
घृतवतीभुवनानाम् ॥ घृतवतीभुवनानामभिश्श्रियोर्वीपृथ्वीमधुदु
घेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणाव्विष्कभितेअजरेभूरिरेत
सा ॥ ४५ ॥ येनःसपत्नाऽअपतेभवन्त्विन्द्राग्निभ्यामवबाधामहे
तान् ॥ वसवोरुद्राऽआदित्याऽउपरिस्पृशम्मोग्ग्रञ्चेत्तारमधिराजम

क्रन् ॥४६॥ आनासत्या। त्रिभिरेकादशैरिहदेवेभिर्यातम्मधुपेयम
श्विना ॥ प्रायुस्तारिष्टन्नीरपाᳬंसिमृक्षतᳩंसेधतन्द्वेषोभवतᳩंसचाभु
वा ॥४७॥ एषवं ॥ एषवस्तोमोमरुतऽइयङ्गीर्म्मान्दार्यस्यमान्यस्य
कारोः ॥ एषायासीष्टतन्वेवयाविद्यामेषंवृजनञ्जीरदानुम् ॥४८॥ स
हस्तोमाःसहच्छन्दसः ॥ सहस्तोमाःसहच्छन्दसऽआवृतः सहप्प्र
माऽऋषयःसप्तदैव्याः ॥ पूर्वेषाम्पन्थामनुदृश्यधीराऽअन्वालेभिरे
रत्थ्योनरश्मीन् ॥४९॥ आयुष्यंवर्च्चस्यम् ॥ आयुष्यंवर्च्चस्यᳩंराय

रुप्पोषुमौद्भिदम्॥इद६ हिरंण्यंवर्च्चस्वज्जैत्रायाविंशतादुमाम्॥५०॥
नतत्॥नतद्रक्षांᳬसिनापिंशाचास्तंरन्तिदेवानामोजं÷प्प्रथमजᳬ
ह्येतत्॥ योबिभर्त्तिदाक्षायण६ हिरंण्यᳬसदेवेषुंकृणुतेदीर्घमायुᳬ
समंनुष्ष्येषुकृणुतेदीर्घमायुं÷॥५१॥ यदाबंध्नन्॥ यदाबंध्नन्दा
क्षायणाहिरंण्य६ शतानींकायसुमनुस्यमांनाः॥तन्मुऽआबंध्नामि
शतशांरदायायुंष्ष्माञ्जरदंष्टिर्यथासंम्॥५२॥ उतनं÷॥ उतनोहिं
र्बुध्न्य÷शृणोत्वजऽएकंपात्पृथिवीसंमुद्रः॥ विश्वेदेवाऽऋंतावृधो

हुवाना÷स्तुतामन्त्रांꣳकविशस्ताऽअवन्तु ॥५३॥ इमागिरं÷ ॥ इमा
गिरंऽआदित्येभ्योघृतस्नूꣳसनाद्राजंभ्योजुह्वाजुहोमि॥शृणोतुमि
त्रोऽअर्य्यमाभगोनस्तुविजातोवरुणोदक्षोऽअꣳशं÷ ॥५४॥ सप्तऽ
ऋषंयꣳ ॥ सप्तऽऋषंयꣳप्प्रतिंहिताꣳशरींरेसप्तरंक्षन्तिसदुमप्प्रंमाद
म् ॥ सप्तापश्स्वपंतोलोकमींयुस्तत्रंजागृतोऽअस्वंप्नजौसत्रसदौंच
देवौ॥५५॥उत्तिष्ठब्रह्मणस्प्पतेदेवयन्तंस्त्वेमहे॥उपप्प्रयंन्तुमरुतं÷
सुदानंवऽइन्द्रंप्प्राशूर्भंवासचां॥५६॥ प्रनूनम् ॥ प्रनूनम्ब्रह्मंणस्प्प

तिर्म्मन्त्रंवदत्युक्त्थम् ॥ यस्म्मिन्निन्द्रोवरुणोमित्रोऽअर्य्यमादेवाऽ
ओकांᳪसिचक्रिरे ॥५७॥ ब्रह्मणस्प्पते ॥ ब्रह्मणस्प्पतेत्वमस्यय
न्तासूक्तस्यबोधितनयञ्चजिन्व ॥ विश्वन्तद्भद्रंय्यदवन्तिदेवाबृहद्
देमविदथेसुवीराः ॥ यऽइमाविश्वाविश्वकर्म्मायोनःपितान्नपतेन्नस्य
नोदेहि ॥५८॥ इतिश्रीवाजसनेयसंहितायांचतुस्त्रिंशोऽध्यायः ॥ ३४
श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ अपेतोदशापाघंद्वादशद्वौद्वा
विᳪशतिः ॥ हरिःॐ अपेतः ॥ अपेतोयन्तुपणयोसुम्न्नादेवपीयवः ॥

अस्यलोकꣳसुतावतꣳ ॥ द्युभिरहोभिरक्तुभिर्व्यक्तंꣳयमोदंदात्ववु
सानंमस्मै ॥ १ ॥ सविताते ॥ सवितातेशरीरेभ्यꣳपृथिव्याँल्लोक
मिच्छतु ॥ तस्मैयुज्यन्तामुस्त्रियाꣳ ॥ २ ॥ वायुश्पुनातु । सवि
तापुंनात्वग्नेर्भ्राजंसासूर्य्यस्यवर्चसा ॥ विमुच्यन्तामुस्त्रियाꣳ ॥
॥ ३ ॥ अश्वत्थेवं÷ ॥ अश्वत्थेवोनिषदंनम्पर्णेवोवसतिष्कृता ॥
गोभाजऽइत्किलासथयत्सनवंथपूरुषम ॥ ४ ॥ सविताते । शरीरा
णिमातुरुपस्थऽआवपतु ॥ तस्मैपृथिविशम्भंव ॥ ५ ॥ प्रजापंतौ

त्वा । देवतायामुपोदकेलोकेनिदधाम्म्यसौ ॥ अपन्नःशोशुचदघ
म् ॥ ६ ॥ परम्मृत्यो ॥ परम्मृत्योऽअनुपरेहिपन्थांय्यस्तेऽअन्न्यऽ
इतरोदेवयानात् ॥ चक्षुष्म्मतेश्शृण्वतेतेब्रवीमिमानःप्प्रजाᳯरीरि
षोमोतवीरान् ॥ ७ ॥ शंव्वातः । शᳯहितेघृणिःशन्तेभवन्त्विष्ट
काः ॥ शन्तेभवन्त्वग्नयःपार्थिवासोमात्वाभिशूशुचन् ॥ ८ ॥
कल्प्पन्तान्ते । दिशस्तुब्भ्यमापःशिवतमास्तुब्भ्यम्भवन्तुसिन्धं
वः ॥ अन्तरिक्षᳯशिवन्तुब्भ्यङ्कल्प्पन्तान्तेदिशःसर्वाः ॥ ९ ॥ अ

श्म्मन्वतीरीयतेसꣳरभध्वमुत्तिष्ठतप्रतरतासखायः ॥ अत्राजही
मोशिवायेऽअसञ्छिवान्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघम् ॥
अपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपामार्गत्वमस्म्मदपदुः
ष्वप्न्यꣳसुव ॥ ११ ॥ सुमित्रियानः ॥ सुमित्रियानऽआपओषधयः स
न्तुदुर्म्मित्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ १२ ॥
अनड्वाहमन्वारभामहेसौरभेयꣳस्वस्तये ॥ सनऽइन्द्रऽइवदेवेभ्यो
वह्निःसन्तारणोभव ॥ १३ ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वःप

श्यन्तऽउत्तरम् ॥ देवन्देवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ १४ ॥
इमञ्जीवेब्भ्यः । परिधिन्दधामिमैषान्नुगादपरोऽअर्त्थमेतम् ॥ शत
ञ्जीवन्तुशरदःपुरूचीरन्तर्म्मृत्युन्दधताम्पर्व्वतेन ॥ १५ ॥ अग्नऽआ
यूꣳषि । पवसऽआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥ १६ ॥
आयुष्मानग्ने । हविषावृधानोघृतप्प्रतीकोघृतयोनिरेधि ॥ घृतम्पी
त्वामधुचारुगव्यम्पितेवपुत्रमभिरक्षतादिमान्त्स्वाहा ॥ १७ ॥ परी
मे । गामनेषतपर्य्यग्निमहृषत ॥ देवेष्ष्वक्रतश्श्रवःकऽइमाँ२ऽआद

धर्षति ॥ १८ ॥ क्रव्यादमग्निम् ॥ क्रव्यादमग्निम्प्रहिणोमिदूरँय्यम
राज्यंङ्गच्छतुरिप्प्रवाहः ॥ इहैवायमितरोजातवेदादेवेब्भ्योहव्यंवह
तुप्प्रजानन् ॥ १९ ॥ वहंव्वपाम् ॥ वहंव्वपाञ्जातवेदःपितृब्भ्योयत्रैना
न्वेत्थनिहिताःपराके ॥ मेदसःकुल्याऽउपतान्त्स्रवन्तुसत्याऽएषा
माशिषःसन्नमन्ताँस्वाहा ॥ २० ॥ स्योनापृथिवि । नोभवानृक्षरानि
वेशनी ॥ यच्छानःशर्म्मसप्प्रथाः ॥ अपनःशोशुचदघम् ॥ २१ ॥
अस्म्मात्त्वम् ॥ अस्म्मात्त्वमधिजातोसित्त्वदयञ्जायताम्पुनः ॥ अ

सौस्वर्गायंलोकायस्वाहां ॥ २२ ॥ इतिश्रीवाजसनेयसंहितायांपञ्च
त्रिंशोऽध्यायः ॥ ३५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥
ऋचंवाच॑षोडशद्यौःशान्तिरष्टौद्वौचतुर्विंशतिः ॥ हरिः ॐ ऋचं
वाचंम् ॥ ऋचंवाचम्प्रपंद्येमनोयजुःप्रपंद्येसामंप्राणम्प्रपंद्येचक्षुः
श्रोत्रम्प्रपंद्ये ॥ वागोजः सहौजोमयिप्राणापानौ ॥ १ ॥ यन्मे ।
छिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्म्मेतद्दधातु ॥ श
न्नोभवतुभुवंनस्ययस्पतिः ॥ २ ॥ भूर्भुवः ॥ भूर्भुवःस्वःतत्सवि

तुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ३ ॥ कयां
नः ॥ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिंष्ठयावृ
ता ॥ ४ ॥ कस्त्वा । सत्योमदानाम्मꣳहिष्ठोमत्सदन्धसः ॥ दृढाचिं
दारुजेव्वसु ॥ ५ ॥ अभीषुणः । सखीनामविताजरितॄणाम् ॥ शतम्भ
वास्यूतिभिः ॥ ६ ॥ कयात्वम् । कयात्वन्नऽऊत्याभिप्प्रमन्दसेवृष
न् ॥ कयास्तोतृब्भ्यऽआभर ॥ ७ ॥ इन्द्रोविश्वस्यराजति । शन्नोऽअ
स्तुद्विपदेशञ्चतुष्प्पदे ॥ ८ ॥ शन्नोमित्रःशंवरुणःशन्नोभवत्वर्य्यमा ॥

शन्नऽइन्द्रोबृहस्पतिꣳशन्नोविष्णुरुरुक्रमः ॥ ९ ॥ शन्नोवातः ।
पवताꣳशन्नस्तपतुसूर्य्यः ॥ शन्नꣳकनिक्रदद्देवः पर्ज्जन्योऽअभिव
र्षतु ॥ १० ॥ अहानिशम् ॥ अहानिशम्भवन्तुनꣳशꣳरात्रीꣳप्रति
धीयताम् ॥ शन्नऽइन्द्राग्नीभवतामवोभिꣳशन्नऽइन्द्रावरुणारातह
व्या ॥ शन्नऽइन्द्रापूषणावाजसातौशमिन्द्रासोमासुवितायशंय्योः
॥ ११ ॥ शन्नः ॥ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्यो
रभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिवि । नोभवानृक्षरानिवेशनी ॥

यच्छानः॑शर्म्मसुप्प्रथाः॑ ॥ १३ ॥ आपोहि । ष्ठामयोभुवस्तानऽ
ऊर्जेदधातन ॥ महेरणायचक्षसे ॥ १४॥ योवः॑ । शिवतमोरस
स्तस्यभाजयतेहनः॑ ॥ उशतीरिवमातरः॑ ॥ १५ ॥ तस्म्माऽअरं
म ॥ तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्न्वथ ॥ आपोजनयथा
चनः॑ ॥ १६ ॥ [ १६ ] द्यौःशान्तिः॑ ॥ द्यौःशान्तिरन्तरिक्षꣳशा
न्तिः॑पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः॑ ॥ व्वनस्प्पतयः
शान्तिर्व्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिः सर्व्वꣳशान्तिःशान्तिरेवशा

न्तिःसामाशान्तिरेधि ॥ १७ ॥ दृतेदृꣳहंमामित्रस्यंमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम् ॥ मित्रस्याहञ्चक्षुषासर्वाणिभूतानिसमीक्षे ॥ मित्रस्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳहंमा ॥ ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्तेसन्दृशिजीव्यासम् ॥ १९ ॥ नमंस्तेहरसेशोचिषेनमंस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयंःपावकोऽअस्मभ्यंꣳशिवोभंव ॥ २० ॥ नमंस्ते । अस्तुविद्युतेनमंस्तेस्तनयित्नवे ॥ नमंस्तेभगवन्नस्तुयतःस्वःसमीहंसे ॥ २१ ॥

यतोयतःसमीहसेततोनोऽअभयङ्कुरु॥ शन्नः कुरुप्रजाभ्योभयन्नः
पशुभ्यः ॥ २२ ॥ सुमित्रियानः ॥ सुमित्रियानऽआपऽओषध
यःसन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः
॥ २३ ॥ तच्चक्षुः ॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम
शरदः शतञ्जीवेमशरदः शतꣳशृणुयामशरदः शतम्प्रब्रवामश
रदः शतमदीनाःस्यामशरदः शतम्भूयश्चशरदः शतात् ॥ २४ ॥
[ ८ ] इतिश्रीवाजसनेयसंहितायांषट्त्रिंशोऽध्यायः ॥ ३६ ॥ श्रीवेद

पुरुषायनमः ॥ अनुवाकसूत्रम् ॥ देवस्यत्वादशयमायत्वैकादशद्वा
वेकविꣳशतिः ॥ हरिःॐदेवस्यंत्वा । सवितुः प्रंसवेऽश्विनोर्बाहुभ्यां
म्पूष्णोहस्तांभ्याम् ॥ आदंदेनारिरसि ॥ १ ॥ युञ्जतेमनं ॥ युञ्ज
तेमनंऽउतयुंञ्जतेधियोविप्राविप्रंस्यबृहतोविंपश्चितं ॥ विहोत्रां
दधेवयुनाविदेकऽइन्महीदेवस्यंसवितुःपरिंष्टुतिः ॥ २ ॥ देवीद्यावा
पृथिवी । मखस्यंवामद्यशिरोंराध्यासन्देवयजंनेपृथिव्याः ॥ मखा ॥१०८॥
यंत्वामखस्यंत्वाशीर्ष्णे ॥ ३ ॥ देव्योवम्र्यः ॥ देव्योवम्र्योभूतस्यं

ष्प्रथमुजामुखस्यंवोद्यशिरोंराध्यासन्देवुयजंनेपृथिव्याः ॥ मुखायं
त्वामुखस्यंत्वाशीुर्ष्णों ॥ ४ ॥ शतम् १९०० ॥ इयुत्यग्ग्रें ॥ इयुत्य
ग्ग्रंऽआसीन्मुखस्यंतेद्यशिरोंराध्यासन्देवुयजंनेपृथिव्याः ॥ मुखायं
त्वामुखस्यंत्वाशीुर्ष्णों ॥ ५ ॥ इन्द्रुस्यौजं÷ ॥ इन्द्रुस्यौजंस्त्थमुख
स्यंवोद्यशिरोंराध्यासन्देवुयजंनेपृथिव्याः ॥ मुखायंत्वामुखस्यंत्वा
शीुर्ष्णों ॥ मुखायंत्वामुखस्यंत्वाशीुर्ष्णों ॥ मुखायंत्वामुखस्यंत्वाशीु
र्ष्णों ॥ ६ ॥ प्रैतु । ब्रह्मंणुस्प्पतिःप्प्रदेुव्येतुसूनृतां ॥ अच्छांवीुरन्नर्य्यं

म्पङ्क्तिराधसन्देवायुज्ञन्नयन्तुनः ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥
मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ ७ ॥
मुखस्युशिरः ॥ मुखस्युशिरोसि ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥
मुखस्युशिरोसि॥मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखस्युशिरोसि॥
मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मु
खायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ ८ ॥
अश्वंस्यत्वा । वृष्णंःशुक्राधूंपयामिदेवयजंनेपृथिव्याः ॥ मुखायं

त्वामखस्यत्वाशीर्ष्णे ॥ अश्वस्यत्वावृष्णः शक्नाधूपयामिदेवयजने
पृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ अश्वस्यत्वावृष्णः शक्ना
धूपयामिदेवयजनेपृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखा
यत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वा
मखस्यत्वाशीर्ष्णे ॥ ९ ॥ ऋजवेत्वा ॥ साधवेत्वासुक्षित्यैत्वा ॥ मखा
यत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वा
मखस्यत्वाशीर्ष्णे ॥ १० ॥ [१०] यमायत्वा । मखायत्वासूर्यस्यत्वा

तपसे ॥ देवस्त्वासवितामद्ध्वानक्तुपृथिव्याःसꣳस्पृशस्प्पाहि ॥ अर्च्चि
रसिशोचिरसितपोसि ॥ ११ ॥ अनाधृष्टापुरस्तात् ॥ अनाधृष्टापुरस्ता
दुग्नेराधिपत्यऽआयुर्म्मेदाःपुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्येप्प्रजा
म्मेदाः सुखदापश्चाद्देवस्यसवितुराधिपत्येचक्षुर्म्मेदाऽआश्श्रुतिरुत्तर
तोधातुराधिपत्येरायस्प्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्प्पतेराधिप
त्यऽ ओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्प्पाहिमनोरश्वासि ॥१२॥
स्वाहामुरुद्भिः । परिश्रीयस्वदिवःसꣳस्पृशस्प्पाहि ॥ मधुमधुमधु

॥ १३ ॥ गर्ब्भौदेवानाम् ॥ गर्ब्भौदेवानाम्पितामतीनाम्पतिंꣳप्प्रजा
नाम् ॥ सन्देवोदेवेनसवित्त्रागतसꣳसूर्य्यैणरोचते ॥ १४ ॥ समग्निः ॥
समग्निरग्निनागतसन्दैवेनसवित्त्रासꣳसूर्य्यैणारोचिष्ट ॥ स्वाहासमग्नि
स्तपसागतसन्दैव्येनसवित्त्रासꣳसूर्य्यैणारूरुचत ॥ १५ ॥ धर्त्तादि
वः ॥ धर्त्तादिवोव्विभातितपसस्पृथिव्यान्धर्त्तादेवोदेवानाममर्त्यस्तपो
जाः ॥ व्वाचमस्म्मेनियच्छदेवायुवम् ॥ १६ ॥ अपश्यङ्गोपाम् ॥ अप
श्यङ्गोपामनिपद्यमानमाचपराचपथिभिश्चरन्तम् ॥ ससद्ध्रीचीꣳसवि

ह्यसावेह्यसावेहि ॥ २ ॥ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥
पूषासिघर्म्मायदीष्व ॥ ३ ॥ अश्विभ्याम्पिन्वस्वसरस्वत्यैपिन्वस्वे
न्द्रायपिन्वस्व ॥ स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥४॥ यस्ते । स्त
नःशशयोयोमयोभूर्य्योरत्नधावसुविद्यःसुदत्रः ॥ येनविश्वापुष्य
सिवार्य्याणिसरस्वतितामिहधातवेकः ॥ उर्वन्तरिक्षमन्वेमि ॥ ५ ॥ गा
यत्रञ्छन्दः ॥ गायत्रञ्छन्दोसित्रैष्टुभञ्छन्दोसिद्यावापृथिवीभ्यां
त्वापरिगृह्णाम्म्यन्तरिक्षेणोपयच्छामि ॥ इन्द्राश्विनामधुनःसारघस्य

घर्म्मरूपातब्वसेवोयजतब्वाट् ॥ स्वाहासूर्य्यस्यरश्मयेवृष्टिवनये ॥ ६ ॥
समुद्रायत्वा । ब्वातायस्वाहासरिरायत्वाब्वातायस्वाहा ॥ अनाधृष्ष्या
यत्वाब्वातायस्वाहाप्प्रतिधृष्ष्यायत्वाब्वातायस्वाहा ॥ अवस्यवेत्वाब्वा
तायस्वाहाशिमिदायत्वाब्वातायस्वाहा ॥७॥ इन्द्रायत्वा । ब्वसुमतेरुद्र
वतेस्वाहेन्द्रायत्वादित्यवतेस्वाहेन्द्रायत्वाभिमातिघ्घ्नेस्वाहा ॥ सवित्रे
त्वऽ ऋभुमतेविभुमतेब्वाजवतेस्वाहाबृहस्प्पतयेत्वाब्विश्श्वदेव्यावतेस्वा
हा ॥ ८ ॥ [८] यमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वा

हां घर्म्म शपित्रे ॥ ९ ॥ विश्वाऽआशांः ॥ विश्वाऽआशादक्षिणसद्विश्वा
न्देवानयाडिह ॥ स्वाहाकृतस्य घर्म्मस्य मधोंःपिबतमश्विना ॥ १० ॥
दिविधांः॥ दिविधाऽइमंय्यज्ञमिमंय्यज्ञन्दिविधांः॥ स्वाहाग्नयेयज्ञि
यायशंय्यजुर्भ्यः॥ ११॥ अश्विनाघर्म्मम् ॥ अश्विनाघर्म्मम्पातंहा
र्द्दानमहर्द्दिवाभिरूतिभिः॥तन्त्रायिणेनमोद्यावापृथिवीभ्याम्॥१२
अपातामश्विना। घर्म्ममनुद्यावापृथिवीऽअमः साताम् ॥ इहैवरातयः
सन्तु ॥ १३॥ इषेपिन्वस्व ॥ इषेपिन्वस्वोर्ज्जेपिन्वस्वब्रह्मणेपिन्वस्व

क्षुत्रायपिन्वस्वद्यावापृथिवीभ्याम्पिन्वस्व ॥ धर्म्मासिसुधर्म्मामेन्यु
स्म्मेनृम्णानिधारयुब्रह्मधारयक्षुत्रन्धारयुविशन्धारय ॥ १४ ॥ स्वा
हापूष्णेशरसेस्वाहाग्ग्रावभ्युःस्वाहाप्प्रतिरवेभ्युः ॥ स्वाहापितृभ्य
ऽऊर्द्ध्वबर्हिभ्योघर्म्मपावभ्युःस्वाहाद्यावापृथिवीभ्याᳪस्वाहाविश्श्वे
भ्योदेवेभ्यः ॥ १५ ॥ स्वाहारुद्राय । रुद्रहूतयेस्वाहासञ्ज्योतिषा
ज्ज्योतिः ॥ अहःकेतुनाजुषताᳪसुज्ज्योतिज्ज्योतिषास्वाहा ॥ रात्रिः
केतुनाजुषताᳪसुज्ज्योतिज्ज्योतिषास्वाहा ॥ मधुहुतमिन्द्रतमेऽअग्ना

वृश्यामतेदेवघर्म्मनमस्तेऽ अस्तुमामाहिᳫंसीः ॥ १६ ॥ अभीमम्॥
अभीमम्महिमादिवंविप्प्रोबभूवसप्प्रथाः ॥ उतश्श्रवसापृथिवीᳫंसᳫं
सीदस्वमहाँ २ असिरोचस्वदेववीतमः ॥ विधूममग्नेऽअरुषम्मियेद्ध्य
सृजप्प्रशस्तदर्शतम् ॥ १७ ॥ यातेघर्म्मदिव्व्याशुग्ग्यागायत्र्याᳫंहविर्
द्धाने ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा॥यातेघर्म्मान्तरि
क्षेशुग्ग्यात्रिष्टुब्भ्याग्नीध्रे ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वा
हा ॥ यातेघर्म्मपृथिव्व्याᳫंशुग्ग्याजगत्याᳫंसदस्या ॥ सातऽआप्प्या

यतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ १८॥[१०]क्षत्रस्यत्वा। परस्पायुब्र्ब्र
ह्मणस्तन्वम्पाहि ॥ विशस्त्वाधर्म्मणाव्वयमनुक्रामामसुवितायनव्व्य
से ॥ १९ ॥ चतु÷स्रक्तिर्न्नाभि÷ ॥ चतु÷स्रक्तिर्न्नाभिर्ऋतस्यसप्प्रथाः
सनोव्विश्वायु÷सप्प्रथाःसनेः÷सर्व्वायु÷सप्प्रथाः ॥ अपद्वेषोऽअपह्वरो
न्यव्रतस्यसश्चिम ॥ २० ॥ घर्म्मैतत् ॥ घर्म्मैतत्तेपुरीषन्तेनवर्द्धस्वचा
चप्प्यायस्व ॥ व्वर्द्धिषीमहिचव्वयमाचप्प्यासिषीमहि ॥ २१ ॥ अचि
क्रदद्वृषाहरिर्म्महान्मित्रोनदर्शतः ॥सꣳसूर्य्येणदिद्युतदुदधिर्न्निधीः

॥२२॥ सुमित्रियानः ॥ सुमित्रियानऽआपऽओषधयःसन्तुदुर्म्मित्रि
यास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयंद्विष्मः॥२३॥ उद्वयम्॥ उद्वय
न्तमसस्परिस्वःपश्यन्तऽउत्तरम्॥ देवन्देवत्रासूर्यमगन्मज्योति
रुत्तमम्॥२४॥एधो॥ एधोस्येधिषीमहिसमिदसितेजोसितेजोमयिधे
हि॥२५॥यावतीद्यावापृथिवी। यावच्चसप्तसिन्धवोवितस्थिरे॥ ताव
न्तमिन्द्रतेग्ग्रहꣳसहोर्ज्जागृह्णाम्म्यक्षितम्मयिगृह्णाम्म्यक्षितम्॥ २६॥ म
यित्यत्॥ मयित्यदिन्द्रियम्बृहन्मयिदक्षोमयिक्क्रतुः घर्म्मस्त्रिशुग्वि

राजतिद्विराजाज्ज्योतिषासहब्रह्मणातेजसासह ॥ २७ ॥ पयसोरे
तः ॥ पयसोरेतऽआभृतन्तस्यदोहमशीमह्युत्तरामुत्तराᳬसमाम् ॥
त्विषः संवृक्त्वेदक्षस्यतेसुषुम्मणस्यतेसुषुम्मणाग्निहुतः ॥ इन्द्रपीतस्य
प्रजापतिभक्षितस्यमधुमतऽ उपहूतऽउपहूतस्यभक्षयामि ॥ २८ ॥
[ १० ॥ इतिश्रीवाजसनेयसंहितायाअष्टत्रिंशोऽध्यायः ॥ ३८ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ स्वाहाप्राणेभ्यः षड्ग्रश्च
सप्तद्यौत्रयोदश ॥ हरिः ॐ स्वाहाप्प्राणेभ्यः ॥ स्वाहाप्प्राणेभ्युं

साधिपतिकेभ्यः ॥ पृथिव्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहावायवे
स्वाहा ॥ दिवेस्वाहासूर्य्यायस्वाहा ॥ १ ॥ दिग्भ्यःस्वाहा । चन्द्राय
स्वाहानक्षत्रेभ्यःस्वाहाद्भ्यःस्वाहावरुणायस्वाहा ॥ नाभ्यैस्वाहापू
तायस्वाहा॥ २ ॥ वाचेस्वाहा । प्राणायस्वाहाप्राणायस्वाहा ॥ चक्षुषे
स्वाहाश्रोत्रायस्वाहाश्रोत्रायस्वाहा॥ ३ ॥ मनसःकामम् ॥ मनसः
काममाकूतिंवाचःसत्यमशीय ॥ पशूनाꣳरूपमन्नस्यरसोयशःश्रीः
श्रयतांमयिस्वाहा ॥ ४ ॥ प्रजापतिःसम्भ्रियमाणःसम्राट्सम्भृतोवै

श्चदेवःसꣳसन्नोघर्म्मःप्रवृक्तस्तेजऽउद्यतऽआश्विनः पयस्यानीयमा
नेपौष्णोविष्यन्दमानेमारुतःक्लथन् ॥ मैत्रःशरसिसन्ताय्यमानेवा
यव्योह्रियमाणऽआग्नेयोहूयमानोवाग्घुतः ॥ ५ ॥ सविताप्रथमे ।
हन्नग्निर्द्वितीयेवायुस्तृतीयऽआदित्यश्चतुर्थेचन्द्रमाःपञ्चमऽऋतुःषष्ठे
मरुतःसप्तमेबृहस्पतिरष्टमे ॥ मित्रोनवमेवरुणोदशमऽइन्द्रऽएका
दशेविश्वेदेवाद्वादशे ॥ ६ ॥ उग्रश्च । भीमश्चध्वान्तश्चधुनिश्च ॥ सा
सह्वाँश्चाभियुग्वाचविक्षिपःस्वाहा ॥ ७ ॥ अग्निꣳहृदयेन ॥ अग्निꣳ

हृदयेनाशनिꣳ हृदयाग्रेणपशुपतिङ्कृत्स्नहृदयेनभवंय्यक्ना ॥ शर्वं
म्मतस्नाब्भ्यामीशानम्मन्युनामहादेवमन्तःपर्शव्येनोग्रन्देवंव्वनि
ष्ठुनाव्वसिष्ठहनुꣳशिङ्गीनिकोश्याभ्याम् ॥ ८ ॥ उग्रंल्लोहितेनामित्रꣳ
सौव्व्रत्येनरुद्रन्दौव्व्रत्येनेन्द्रम्प्रक्रीडेनमरुतोबलेनसाद्ध्यान्प्रमुदा ॥ भ
वस्यकण्ठ्यꣳरुद्रस्यान्तःपार्श्व्यम्महादेवस्ययकृच्छर्वस्यव्वनिष्ठुःपशुप
तेःपुरीतत् ॥ ९ ॥ लोमभ्यःस्वाहा । लोमभ्यःस्वाहात्वचेस्वाहात्व
चेस्वाहालोहितायस्वाहालोहितायस्वाहामेदोभ्यःस्वाहामेदोभ्यः

स्वाहा॥ माᳪंसेब्भ्यः स्वाहा माᳪंसेब्भ्यः स्वाहा स्न्नावब्भ्यः स्वाहा स्न्ना
वब्भ्यः स्वाहास्त्थब्भ्यः स्वाहास्त्थब्भ्यः स्वाहा मज्जब्भ्यः स्वाहा मज्ज
ब्भ्यः स्वाहा॥ रेतसे स्वाहा पायवे स्वाहा॥१०॥ आयासाय स्वाहा। प्प्रा
यासाय स्वाहा संय्यासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा॥ शुचे
स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा॥११॥ तपसे स्वा
हा। तप्प्यते स्वाहा तप्प्यमानाय स्वाहा तप्प्ताय स्वाहा घर्म्माय स्वाहा॥
निष्क्कृत्यै स्वाहा प्प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा॥१२॥ यमाय स्वा

हा॥यमायस्वाहान्तकायस्वाहामृत्यवेस्वाहा॥ब्रह्मणेस्वाहाब्रह्महत्या
यैस्वाहाविश्वेभ्योदेवेभ्यःस्वाहाद्यावापृथिवीभ्याᳪस्वाहा ॥ १३ ॥
इतिश्रीवाजसनेयसंहितायांएकोनचत्वारिंशतितमोऽध्यायः ॥ ३९ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ ईशावास्यमष्टावंधंतमोनवद्वे
सप्तदश ॥ हरिःॐ ईशावास्यम्॥ ईशावास्यमिदᳬसर्वंय्यत्किञ्चजग
त्याञ्जगत् ॥ तेनत्यक्तेनभुञ्जीथामागृधःकस्यस्विद्धनम् ॥ १ ॥ कुर्व
न्नेव ॥ कुर्वन्नेवेहकर्म्माणिजिजीविषेच्छतᳬसमाः ॥ एवन्त्वयिनान्य

थेतोस्तिनकर्म्मलिप्यतेनरे ॥ २ ॥ असुर्य्यानाम । तेलोकाऽअन्धेन
तमसावृताः ॥ ताँस्तेप्रेत्यापिगच्छन्तियेकेचात्महनोजनाः ॥३॥ अ
नेयदेकम् ॥ अनेयदेकम्मनसोजवीयोनैनद्देवाऽआप्नुवन्पूर्वमर्शत् ॥
तद्धावतोन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥ तदेज
ति । तन्नैजतितद्दूरेतद्वन्तिके ॥ तदन्तरस्यसर्व्वस्यतदुसर्व्वस्यास्यबाह्यतः
॥५॥यस्तु ॥ यस्तुसर्व्वाणिभूतान्यात्मन्येवानुपश्यति ॥ सर्वभूतेषुचा
त्मानन्ततोनविचिकित्सति ॥६॥ यस्मिन्त्सर्व्वाणिभूतान्यात्मैवाभू

अग्ने॒ नय॑ सु॒पथा॑ रा॒येऽअ॒स्मान्विश्वा॑नि देव व॒युना॑नि वि॒द्वान् ॥ यु॒यो॒ध्य॑स्मज्जु॑हुरा॒णमेनो॒ भू

यि॑ष्ठान्ते॒ नम॑ऽउक्तिम्विधेम ॥१६॥ हि॒र॒ण्मये॑न॒ पात्रे॑ण । स॒त्यस्यापि॑हि

तम्मुखम् ॥ यो॒ऽसावा॑दि॒त्ये पु॑रु॒षः॒ सो॒ऽसाव॒हम् ॥ १७ ॥ ॐ ३ ॥ खम्ब्रह्म

॥ १८ ॥ इतिश्रीवाजसनेयसंहितायांचत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

॥ श्रीवेदपुरुषार्पणमस्तु ॥ ॥ दशाध्यायेसमाख्यातानुवाकाः सर्वसं

ख्यया ॥ शतंदशानुवाकाश्चनवान्येचमनीषिभिः ॥ १ ॥ सप्तषष्टिश्चि

तोज्ञेयासौत्रेद्वाविंशतिस्तथा ॥ अश्वएकोनपंचाशत्पंचात्रिंशत्खिलेस्मृ

ताः ॥ २ ॥ शुक्रियेपुतुविज्ञेयाएकादशमनीषिभिः ॥ एकीकृत्यसमाख्यातंत्रिशतंत्र्यधिकंमतं ॥३॥ इतिश्रीवाजसनेयसंहितायामनुवाकः समाप्तः ॥ ॥ ॥ ॥ ॥

इदं पुस्तकं मोहमय्यां निर्णयसागरयंत्रालयाधिपतिना स्वकीये मुद्रणालये मुद्रापितम् ॥ तच्च नासिकक्षेत्रवासि नारायणभट्ट घनपाठीद्वारा पूर्वदोषमार्जनपूर्वकं संशोधय्य प्रकाशितम् ॥

संवत् १९८७ शकाब्दाः १८५२

सन्मूलो यजुराख्यवेदविटपी जीयात् स माध्यंदिनीशाखा यत्र युगेंदुकांडसहिता यत्रास्थिता संहिता ॥ यंत्राभ्राद्विलता विभाति सरसैलार्कदुमिर्कग्दलैः पंचाग्धीपुनर्भोक्वर्णमधुपैः खाग्र्यर्कगुंगुंजितैः ॥ १ ॥

इति श्रीवाजसनेयसंहिताउत्तरविंशतिः समाप्ता ॥

# अथ याज्ञवल्क्यशिक्षा-प्रतिज्ञासूत्र-सर्वानुक्रम-अनुवाकसूत्रप्रारम्भः ॥

इति श्रीवाजसनेयसंहिताउत्तरविंशतिः समाप्ता ॥

# अथ याज्ञवल्क्यशिक्षा-प्रतिज्ञासूत्र-सर्वानुक्रम-अनुवाकसूत्रप्रारम्भः ॥

॥ अथ याज्ञवल्क्यशिक्षाप्रारम्भः ॥

श्रीगणेशाय नमः ॥ ॥ अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः ॥ उदा
त्तश्चानुदात्तश्च स्वरितश्च तथैव च ॥ लक्षणं वर्णयिष्यामि दैवतं स्था
नमेव च ॥ १ ॥ शुक्लमुच्चं विजानीयान्नीचं लोहितमुच्यते ॥ श्यामं
तु स्वरितं विंद्यादग्निमुच्चस्य दैवतम् ॥ २ ॥ नीचे सोमं विजानीया
त्स्वरिते सविता भवेत् ॥ उदात्तं ब्राह्मणं विंद्यान्नीचं क्षत्रियमुच्यते
॥ ३ ॥ वैश्यं तु स्वरितं विंद्याद्भारद्वाजमुदात्तकम् ॥ नीचं गौतममि

त्याहुर्गार्ग्यं च स्वरितं विदुः ॥ ४ ॥ विंद्यादुदात्तं गायत्रं नीचं त्रैष्टु
भमुच्यते ॥ जागतं स्वरितं विंद्यादत एवं नियोगतः ॥ ५ ॥ गांधर्व
वेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः ॥ त एव वेदे विज्ञेयास्त्रय उच्चा
दयः स्वराः ॥ ६ ॥ उच्चौ निषादगांधारौ नीचौ ऋषभधैवतौ ॥ शेषा
स्तु स्वरिता ज्ञेयाः षड्जमध्यमपंचमाः ॥ ७ ॥ षड्जो वेदे शिखंडिः
स्यादृषभः स्यादजामुखे ॥ गवा रंभंति गांधारं क्रौंचाश्चैव तु मध्यमम्
॥ ८ ॥ कौकिलः पंचमो ज्ञेयो निषादं तु वदेद्गजः ॥ आश्वश्च धैवतो

ज्ञेयः स्वराः सप्त विधीयते ॥ ९ ॥ निमेषमात्रः कालः स्याद्विद्युत्का
लस्तथापरे ॥ अक्षरात्तुल्ययोगाच्च मतिः स्यात्सोमशर्मणः ॥ १० ॥
सूर्यरश्मिप्रतीकाशात्कणिका यत्र दृश्यते ॥ आणवस्य तु सा मात्रा
मात्रा च चतुराणवा ॥ ११ ॥ मानसे चाणवं विद्यात्कंठे विद्याद्विरा
णवम् ॥ त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुः ॥ १२ ॥ अव
ग्रहे तु कालः स्यादर्धमात्रा विधीयते ॥ पदयोरंतरे काल एकमात्रा
विधीयते ॥ १३ ॥ ऋचोर्ध्वं तु द्विमात्रः स्यात्त्रिमात्रः स्यादृगंतके ॥

रिक्तं तु पाणिमुत्क्षिप्य द्वे मात्रे धारयेद्बुधः ॥ १४ ॥ एकमात्रो भवे
द्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यंजनं चार्द्ध
मात्रकम् ॥ १५ ॥ विवृतौ चावसाने च ऋचोर्द्धे च तथापरे ॥ पदे च
पादसंस्थाने शून्यहस्तं विधीयते ॥ १६ ॥ प्रणवं तु प्लुतं कुर्याद्व्याहृती
र्मातृका विदुः ॥ चापस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत् ॥ १७ ॥
शिखी वदति त्रिमात्रा मात्राणामिति संस्थितिः ॥ वर्णो जातिश्च मा
त्रा च गोत्रं छंदश्च दैवतम् ॥ १८ ॥ एतत्सर्वं समाख्यातं याज्ञवल्क्येन

धीमता ॥ हस्तौ तु संयतौ धार्यौ जानुभ्यामुपरि स्थितौ ॥ १९ ॥ गुरो
रनुमतं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ ऊरुभागे तृतीये तु करं विन्यस्य
दक्षिणम् ॥ २० ॥ प्रसन्नमानसो भूत्वा किंचिन्निम्नमधोमुखं ॥ प्रणवं
प्राक् प्रयुंजीत व्याहृतीस्तदनंतरम् ॥ २१ ॥ सावित्रींचानुपूर्व्येण ततो
वेदान् समारभेत् ॥ कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः ॥ २२ ॥
स्वस्थः प्रशांतो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ नाभ्याहन्यान्ननिर्हन्यान्न
गायेन्नैव कंपयेत् ॥ २३ ॥ यथैवोच्चारयेद्वर्णांस्तथैवैतान्समापयेत् ॥

निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिंतयेत् ॥ २४ ॥ सममुच्चारयेद्व
र्णान्हस्तेन च मुखेन च ॥ स्वरश्चैव तु हस्तश्च द्वावेतौ युगपद्भवेत्
॥ २५ ॥ हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ॥ न करालो न लंबोष्ठो
नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ॥ २६ ॥
प्रकृतिर्यस्य कल्याणी दंतोष्ठौ यस्य शोभनौ ॥ प्रगल्भश्च विनीतश्च स
वर्णान्वक्तुमर्हति ॥ २७ ॥ शंकितं भीतमुद्धृष्टमव्यक्तमनुनासिकम् ॥
काकस्वरं मूर्ध्निगतं तथा स्थानविवर्जितम् ॥ २८ ॥ विस्वरं विरसं चैव

विश्लिष्टं विषमाहतम् ॥ व्याकुलं तालुहीनं च पाठदोषाश्चतुर्दश॥२९॥
संहितासारबहुलः पदसंज्ञासमाकुलः ॥ क्रमसंधिसमाकीर्णो दुस्तरो
मंत्रसागरः ॥ ३० ॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ॥
साम्नां वा सरहस्यां च सर्वपापैः प्रमुच्यते ॥३१॥ संहिता नयते सूर्यं
पदं च शशिनः पदम्॥ क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम्॥३२॥
कालिंदी संहिता ज्ञेया पदयुक्ता सरस्वती॥ क्रमेणावर्त्तयेद्गंगा शंभो
र्वाणी तु नान्यथा ॥ ३३ ॥ यथा महाह्रदं प्राप्य क्षिप्तो लोष्ठो विन

श्यति ॥ एवं दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥ ३४ ॥ आम्रपालाश
विल्वानामपामार्गशिरीषयोः ॥ वाग्यतः प्रातरुत्थाय भक्षयेद्दंतधावनं
॥ ३५ ॥ खदिरश्च कदंबश्च करवीरकरंजकौ ॥ एते कंटकिनः पुण्याः
क्षीरिणस्तु यशस्विनः ॥ ३६ ॥ तेनास्यकरणे सूक्ष्मं माधुर्यं चैव जा
यते ॥ त्रिफलां लवणाक्तेन भक्षयेच्छिष्यकः सदा ॥ क्षीणमेधाजन
न्येषा स्वरवर्णकरी तथा ॥ ३७ ॥ हस्तहीनं तु योऽधीते मंत्रं वेदविदो
विदुः ॥ न साधयति यजूंषि भुक्तमव्यंजनं यथा ॥ ३८ ॥ हस्तहीनं

तु योऽधीते स्वरवर्णविवर्जितं ॥ ऋग्यजुःसामभिर्दग्धो वियोनिमधि
गच्छति ॥ ३९ ॥ ऋचो यजूंषि सामानि हस्तहीनानि यः पठेत् ॥
अनृचो ब्राह्मणस्तावद्यावत्स्वारं न विंदति ॥४०॥ ज्ञातव्यश्च तथैवार्थो
वेदानां कर्मसिद्धये ॥ पठन्मात्रापपाठात्तु पंके गौरिव सीदति ॥ ४१ ॥
स्वरवर्णप्रयुंजानो हस्तेनाधीतमाचरन् ॥ ऋग्यजुःसामभिः पूतो ब्रह्म
लोकमवाप्नुयात् ॥ ४२ ॥ न कुर्वीत पदं दीर्घं न कुर्वीत विलंबितम् ॥
पदस्य ग्रहमोक्षौ च यथा शीघ्रगतिर्हयः ॥ ४३ ॥ आगमं कुरु यत्नेन

कारणं हि तदात्मकम् ॥ आस्येन च शयं कुर्यात्पठन्नान्यमतिर्भवेत् ॥
॥ ४४ ॥ न चास्य मुष्टिबंधी स्यान्न चात्युत्तममाचरेत् ॥ चुलुनौका
स्फुटो दंडी स्वस्तिको मुष्टिराकृतिः ॥ एते वै हस्तदोषाः स्युः परशुश्चैव
सप्तमः ॥ ४५ ॥ यथा वाणी तथा पाणी रिक्तं तु परिवर्जयेत् ॥ यत्र
यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ॥ ४६ ॥ यथा धनुष्यावितते
शरे क्षिप्ते पुनर्गुणः ॥ स्वस्थानं प्रतिपद्येत तद्वद्धस्तगतः स्वरः ॥ ४७॥
उत्तानं सोन्नतं किंचित्सुव्यक्तांगुलिरंजितं ॥ स्वरविद्धं करं कुर्यात्सादे

शोद्देशगामिनम् ॥४८॥ अंगुष्ठस्योत्तरे पर्वेतर्जन्योपरि यद्भवेत् ॥ प्रादेशस्य तु सोद्देशस्तन्मात्रं चालयेत्करम्॥४९॥मनुष्यतीर्थोच्चं कृत्वा पितृतीर्थोदकं व्रजेत् ॥ नामितं तु करं पृष्ठे सुव्यक्तांगुलिमोक्षणम् ॥५०॥ स्वरिते त्र्यंगुलं विद्यान्निपाते तु षडंगुलम् ॥ उत्थाने तु नवांगुल्यमेतत्स्वरस्य लक्षणम् ॥५१॥ अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ॥ शिष्याणामुपदेशार्थं कुर्याद्वृत्तिं विलंबिताम् ॥५२॥ ऐंद्री तु मध्यमा वृत्तिः प्राजापत्या विलंबिता ॥ अग्निमारुतयोर्वृत्तिः सर्वशा

स्त्रेषु निंदिता ॥ ५३ ॥ मुष्ट्याकृतिर्मकारे तु नकारे तु नखाग्रतः ॥ अ
नुस्वारेंऽगुष्ठक्षेप ऊष्मांतेंऽगुलिमोक्षणम् ॥ ५४ ॥ उदात्तं भुवि पातेन
प्रचयं नोग्र एव च ॥ शेषं षडंगुलं विंद्यान्निचितं तु विधीयते ॥ ५५ ॥
षडंगुलं तु जात्यस्य हस्तस्यानुपथस्य च ॥ तच्चतुर्भागमात्रं तु हस्त
स्तेनैव वर्तयेत् ॥ ५६ ॥ ककारांते टकारांते ङणे चांगुलिनामयेत् ॥
पंचांगुल्यमकारे च तकारे कुंडलाकृतिः ॥ ५७ ॥ ऊर्ध्वक्षेपाच्च योष्मा
च अधःक्षेपाच्च यो भवेत् ॥ एकैकामुत्सृजेद्धीरः स्वरिते तूभयं क्षि

पेत् ॥ ५८ ॥ अंगुष्ठाकुंचनं लघ्वो अनुस्वारे त्वपाठंरसम् ॥ दीर्घे रंगे च तर्जन्याः प्रसारः परिकीर्तितः ॥ ५९ ॥ तर्जन्यंगुष्ठयोः स्पर्शोऽप्युदात्तं प्रतिविद्यते ॥ नीचं तु मध्यमं कुर्याच्छेषं नीचतरं क्रमात् ॥ ६० ॥ स्वरितं यद्भवेत्किंचिद्वकारसहसंयुतं ॥ ऊष्माणं तद्विजानीयान्निक्षिपे दुभयोरपि ॥ ६१ ॥ स्वरितसंज्ञे च निक्षिप्ते संयोगो यत्र दृश्यते ॥ द्विमात्रिके भवेदेकमात्रिके तूभयं क्षिपेत् ॥ ६२ ॥ जात्ये च स्वरिते चैव वकारो यत्र दृश्यते ॥ कर्तव्यस्तूभयोः क्षेपो वायव्य इति दर्शनम्

॥ ६३ ॥ शृंगवद्वाथ वत्सस्य कुमारीकुचयुग्मवत् ॥ उभक्षेपस्वरो यत्र
स विसर्ग उदाहृतः ॥ ६४ ॥ विसर्गांतस्वरो यत्र स्वरितो यत्र दृश्यते ॥
दीर्घश्चैव तुकारश्च तत्रोभक्षेप उच्यते ॥ ६५ ॥ त्रिविधस्तु भवेदूष्मा
प्रचिता वल्कातरा ॥ स्वरिते प्रचितां विद्यान्निपाते वल्कां विदुः ॥ ६६ ॥
उत्थाने तु तथा तारा एताभिस्त्रिभिरूष्मभिः ॥ मात्रामात्रा विदित्वा
तु ततः क्षेपं प्रयोजयेत् ॥ ६७ ॥ अक्षरं भजते काचित्काचिद्वृत्ते
प्रतिष्ठितं ॥ समाने जातिका काचित्काचिदूष्माप्रदायिका ॥ ६८ ॥

यथा बालस्य सर्पस्य उच्छ्वासो लघुचेतसः ॥ एवमूष्मा प्रयोक्तव्यो हकारः परिवर्जितः ॥ ६९ ॥ विवृतिं प्रत्यया ऊष्मा प्रवदंति मनीपिणः ॥ तामेव प्रतिषेधंति यथा आईऊएइति निदर्शनम् ॥ ७० ॥ अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव तु लक्षणम् ॥ जात्योभिनिहितक्षैप्रः प्रश्लिष्टश्च तथापरः ॥ ७१ ॥ पादवृत्तस्तथा भाव्य इति स्वराः ॥ एकपदे नीचपूर्वः सयवोजात्यः ॥ एकपदइत्याह ॥ ७२ ॥ नीच पूर्वः सयकारवकारौ वा जात्यः स्वरितो भवति ॥ यथाजात्यं मनुष्यानि

ति सुद्येति चम्वीव धान्यम् कन्या इव स्वः वीर्यं एवꣳह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवंति ॥ एओ आभ्यामुदात्ताभ्या मकारो रिफितश्च यः ॥ अकारो यत्र लुप्येत तं चाभिनिहितं विदुः ॥ ७३ ॥ यथा कुक्कुटः-असि कुक्कुटोसि ॥ वेदः-असि वेदोसि ॥ भागः-असि भागोसि ॥ मारुतः-असि मारुतोसि ॥ श्वात्रः-असि श्वात्रोसि ॥ तेअप्सरसाम्-तेप्सरसाम् ॥ ते-अवंतु तेवंतु ॥ कः-असि कोसि ॥ सः-अहं सोहं ॥ एवꣳहि यानि चान्यानि ईदृग्लक्षणानि पदानि भवंति ॥

इउवर्णौ यदोदात्तावाद्द्येते यवौ कचित् ॥ अनुदात्ते पदे नित्यं विंद्या
त्क्षैप्रस्य लक्षणम्॥७४॥यथात्रि-अंबकम् त्र्यंबकम् ॥ द्रु-अन्नः द्रुन्नः॥
वीडु-अंगः वीडुंगः ॥ वाजी-अर्वन् वाज्यर्वन् ॥ एवꣳह्याहयानि० ॥
इकारो यत्र दृश्येत इकारेणैव संयुतः ॥ उदात्तश्चानुदात्तेन प्रश्लिष्टो
भवति स्वरः ॥ ७५ ॥ अभि-इन्धताम् अभीन्धताम् ॥ अभि-इमं
अभीमम् ॥ वि-इहि वीहि ॥ स्रुचि-इव स्रुचीव ॥ चम्वी-इव चम्वीवे
ति ॥ एवꣳह्याहयानिचान्यानि० ॥ उदात्तपूर्वं यत्किंचिच्छंदसि स्व

रितं पदम् ॥ एष सर्वं बहुस्वारस्तैरोव्यंजन उच्यते ॥ ७६ ॥ इडे रंते हव्ये काम्ये चंद्रेज्योते अदिति सरस्वती महि विश्रुतीति भवंति ॥ एवꣳह्याहयानि० भवंति॥ अवग्रहात्परो यस्तु स्वरितः स्यादनंतरम्॥ तैरोविरामं तं विंद्यादुदात्तो यद्यवग्रहः ॥ ७७ ॥ यथा गोमदितिगो-मत् ॥ गोपतावितिगो-पतौ ॥ प्रप्रेतिप्र-प्र ॥ विततेतिवि-तता ॥ समिद्धइतिसम्-इद्धः ॥ एवꣳह्याहयानि० भवंति ॥ स्वरेति स्वरिते चैव विवृतिर्यत्र दृश्यते ॥ पादवृत्तो भवेत्स्वारः श्वित्रआदित्येति निदर्शनम् ॥

श्वित्रः-आदित्यानां श्वित्र आदित्यानाम् ॥ पुत्रः-ईधे-पुत्रईधे ॥ दात्रे-
एधि दात्रएधि ॥ कः-ईम् कईम् ॥ ताः-अस्यताअस्य ॥ एवꣳह्याह
यानि० ॥ उदात्ताक्षरयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥ तथा भाव्यं भवे
त्कंपस्तनूनप्त्रेति निदर्शनम् ॥ ७८ ॥ यथातनूनप्त्रइति-तनूनप्त्रे ॥
तनूनपादिति तनू-नपात् ॥ तनूनपातमिति तनू-नपातम् ॥ एवꣳह्या
हयानि पदानि लक्षणानि भवंति ॥ इत्यष्टपदसमाम्नाये वैशेषिके
याज्ञवल्क्यवचनानां पदानां पाठः समासः ॥ ॥ माध्यंदिनविरोधि

स्यात्तथा भाव्यस्तु यः स्मृतः ॥ स्वरो नैवात्र दृश्येत भिन्नोदात्तानुदात्तकौ ॥१॥ स्वराः स्पर्शान्तःस्थोष्माणः ॥ कंठ्यजिह्वामूलीयतालव्यमूर्धन्यदंत्यओष्ठ्ययमा विसर्जनीयानिपाताद्याश्च किंवर्णदैवत्यलिंगाः स्वराः शुक्लाः नानादैवत्याः ॥ स्पर्शाः कृष्णाः ॥ कपिला अंतस्थाः ऊष्माणोऽरुणाः ॥ नीला यमाः ॥ हरिता नासिक्याः ॥ पीतोऽनुस्वारः ॥ रक्तो जिह्वामूलीयः पीतउपध्मानीयः ॥ श्वेतो विसर्जनीयः ॥ शबलो रंगः ॥ नीलोऽनुनासिक्यः ॥ इत्यंतर्मध्यमयोर्नासिक्यं विद्यात् ॥

द्विरुदात्ताख्या इति स्मृतः ॥ उदमनुदनिपाते आद्ये चोपसर्गे नामा
ख्याते चोपसर्गनिपाताश्चेति किंदैवत्याः ॥ अक्षराणां च के पुरुषाः ॥
काः स्त्रियः ॥ कानि नपुंसकानि इत्यत्र ब्रूमः ॥ कंठ्या आग्नेया अका
रादयः ॥ जिह्वामूलीया नैर्ऋत्याः ककारादयः ॥ तालव्याः सौम्याः
चकारादयः ॥ वायव्या मूर्धन्याष्टकारादयः ॥ रौद्रा दंत्याः तकारा
दयः ॥ औष्ठ्या आश्विन्याः पकारादयः ॥ शेषा वैश्वदेवाः ॥ अं इत्ये
वमादयः ॥ स्वरास्तु ब्राह्मणाज्ञेया वर्गाणां प्रथमाश्च ये ॥ द्वितीयाश्च

तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥ २ ॥ वर्गाणां पंचमा वैश्या अंतस्थाश्च तथैव च ॥ ऊष्माणश्च हकारश्च शूद्रा एव प्रकीर्तिताः ॥ ३ ॥ शुक्लवर्णानि नामानि आख्याता रोहिता मताः ॥ कपिंजलास्तूपसर्गाः कृष्णाश्चैव निपातकाः ॥ ४ ॥ भार्गवगोत्राणि नामानि भारद्वाजा आख्याताः ॥ वासिष्ठा उपसर्गास्तु निपाताः काश्यपाः स्मृताः ॥ पीतवर्णश्चोपसर्गो निपातः कृष्णवर्णकः ॥ सर्वं तु सौम्यमाख्यातं नाम वायव्यं दृश्यते ॥ आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ ५ ॥

प्रथमाश्च तथांतस्थाः स्त्रीलिंगाः परिकीर्तिताः ॥ शेषाक्षराणि पंढानि प्राहुर्लिंगविवेचकाः ॥ ६ ॥ नाम्नामिंद्रो देवता वरुणः उपसर्गाणामा दित्यः सर्गस्याक्षरगणस्य स्वरा विसर्जनीयो यमाश्च पुँल्लिंगाः ॥ ङञ णनमा यरलवाः स्त्रीलिंगाः ॥ शेषाण्यक्षराणि नपुंसकलिंगानीति ॥ संधिश्चतुर्विधो भवतीति ॥ लोपागमौवर्णविकारः प्रकृतिभावश्चेति ॥ तद्यथा-तत्र लोपो भवति अयक्ष्माः-मा अयक्ष्मामा ॥ शततेजाः-वायुः शततेजावायुः ॥ तिग्मतेजाः-द्विपतः तिग्मतेजाद्विपतः ॥ इति

लोपः ॥ आगमो भवति-यथा प्रत्यक्सोमः प्रत्यङ्सोमः ॥ प्राक्सो
मः प्राङ्सोमः ॥ अस्मान् सीते अस्मान्त्सीते ॥ त्रीन् समुद्रान् त्री
न्त्समुद्रान् ॥ इतिआगमः ॥ विकारो भवति आ-इदम् एदम् ॥ आ-
इमे एमे ॥ आ-इष्टयः एष्टयः ॥ प्र-इषितः प्रेषितः ॥ इतिविकारः ॥
प्रकृतिभावः यथा-आशुः शिशानः ॥ युञ्जानः प्रथमम् ॥ अदितिः
षोडशाक्षरेण ॥ देवोवःसविता ॥ इतिप्रकृतिभावः ॥ आकारास्था
यथा विद्युत्स्फुटितं मणिसूत्रवत् ॥ एषच्छेदोविवृत्तीनां यथा बाले

पु कर्तरि ॥७॥ द्वयोस्तु स्वरयोर्मध्ये संधिर्यत्र न दृश्यते ॥ विवृत्तिस्त
त्र विज्ञेया यईशेति निदर्शनम् ॥८॥ पिपीलिका पाकवती तथा वत्सा
नुसारिणी ॥ वत्सानुसंसृता चैव चतस्रस्तु विवृत्तयः ॥९॥ पंचरंगाः
प्रवर्तंते घातनिर्घातवज्रिणः ॥ अहरम्हरोज्ञेय अइउऋओ इति निदर्श
नम् ॥१०॥ पिपीलिका आद्यंतदीर्घा नाभ्याआसीदिति निदर्शनम् ॥
पाकवत्युभयोर्ह्रस्वा विनइन्द्रेति निदर्शनम् ॥११॥ अंते च वत्सानु
सृजता तानेत्यसौ आवोढमाश्विनेति नि० ॥ वत्सानुसारिणी चादौ

॥ १३ ॥

दीर्घा ताअस्येति नि० ॥१२॥ करिणी कुर्विणी चैव हरिणी हारिणीति
च॥तथा हंसपदा नाम पंचैताः स्वरभक्तयः ॥१३॥ करिणी रहयोर्योगे
कुर्विणी लहकारयोः॥ हरिणी रषयोर्योगे हारितं ऋषकारयोः ॥१४॥
या तु हंसपदा नाम सा तु रेफषकारयोः ॥ हरिणी हरयोर्विद्यात्कु
र्विणी लहकारयोः ॥१५॥ देवंबर्हिरिति करिणी उपह्वरेति कुर्विणी ॥
हरिणीं अरेषसइत्याहुर्हारिणी शतवल्हेतिच ॥ १६ ॥ वर्षोवर्षीयते
सीति तथा हंसपदेति च ॥ स्वरभक्तिंप्रयुंजानस्त्रीन्दोषान्परिवर्जयेत्

॥१७॥ इकारं चाप्युकारं च ग्रस्तदोषं तथैव च ॥ एतल्लक्षणमाख्यातं याज्ञवल्क्येन धीमता ॥ १८ ॥ सम्यक् पाठस्य सिद्ध्यर्थं शिष्याणां हितकाम्यया ॥ अर्धमात्रास्वरंकिंचित्पृथङ्न्यूनमिवोच्चरन् ॥ ऋकारे च हकारे च हृत्कंठमनसानि च ॥ १९ ॥ नैतत्स्वरितपूर्वांगे नापरांगे कथंचन ॥ न स्वरे न च मात्रायां कथं स्वारो विधीयते ॥ २० ॥ परांगस्य तु यत्पूर्वं पूर्वांगस्य तु यत्परम् ॥ उभयार्द्धार्द्धसंयोगे स्वारं कुर्याद्विचक्षणः ॥ २१ ॥ संयोगे तु परं स्वार्थं परं संयोगनायकम् ॥ संयु

त्तस्य तु वर्णस्य न स्वार्थं पूर्वमक्षरम् ॥ २२ ॥ उदात्तादनुदात्ते तु वा
माया भ्रुव आरभेत् ॥ उदात्तात्स्वरितोदात्तौ क्रमाद्दक्षिणतो न्यसेत्
॥ २३ ॥ स्वरितादनुदात्ता ये प्रचयास्तान्प्रचक्षते ॥ एकस्वरं रापि
चातानाहुस्तत्त्वार्थचिंतकाः ॥ २४ ॥ प्रचयो यत्र दृश्येते तत्र हन्या
त्स्वरं बुधः ॥ स्वरितः केवलो यत्र मृदुस्तत्र निपातयेत् ॥ २५ ॥ दुर्ब
लस्य यथा राष्ट्रं हरते बलवान्नृपः ॥ एवं व्यंजनमासाद्य अकारो हरते
स्वरम् ॥२६॥ उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा ॥ अक्षरात्तुल्य

योगाच्च नीचे नीचगतानि च ॥ २७ ॥ स्वर उच्चः स्वरो नीचः स्वरः
स्वरित एव च ॥ स्वरप्रधानैस्तैः स्वार्यं व्यंजनं तेन सस्वरम् ॥ २८ ॥
व्यंजनान्यनुवर्तंते यत्र तिष्ठति सस्वरः ॥ स्वरप्रधानं त्रैस्वर्यमाचार्याः
प्रवदंति हि ॥२९॥ मणिवद्व्यंजनं विद्यात्सूत्रवच्च स्वरं विदुः ॥ आचार्याः
सममिच्छंति पदच्छेदं तु पंडिताः ॥३०॥ स्त्रियो मधुरमिच्छंति विकृष्ट
मितरे जनाः॥ उदात्तं नानुवर्तंते नीचन्नस्वरितं तथा ॥३१॥ विस्वरं तं
विजानीयाद्दीर्घह्रस्वविवर्जितम् ॥ हरिवरुणवरेण्येषुधारपुरुषेषु च ॥

स्वरिते रेफवैश्वानरो नकारः शेषाकारः स्वरिता नकाराः ॥ ३२ ॥ द्वौ
वरुणौ च स्वरितौ ॥ उदुत्तमं वरुणधारयेवरेरुधारा उरुधारा च होइते ॥
मात्रिकं वा द्विमात्रं वा स्वरितं यदिहाक्षरम् ॥ तस्यादितोर्द्धमात्रा वै
शेषं च परतो भवेत् ॥ ३३ ॥ नकारांते पदे पूर्वे श्मश्रुभिः परतः स्थि
ते ॥ छकारं न प्रयुंजीत ञशसंधिं समुच्चरेत् ॥ ३४ ॥ ओकारं प्लुतवि
ज्ञेयं प्लुतमस्माद्द्वितीयकम् ॥ लाजीं छाचीं तृतीयं च विवेशेति चतुर्थ
कम् ॥३५॥ अधःस्विदासीत्पंचमं चोपरिस्विदासीच्चषष्ठकम् ॥ सप्तमं

तु भ्रुवोः स्मार अष्टमं नैव विद्यते ॥३६॥ उच्चस्थानगते हस्ते स्वरितं नोपपद्यते ॥ अधस्थातु यदागच्छेत्स्वारितं न तदा भवेत् ॥ कचटतपा दृश्यंते संधिस्थानेषु नित्यशः ॥ स्ववर्गेणैव संयुक्ता मोक्षं तत्र न कारयेत् ॥ तकारांते पदे पूर्वे सकारेपरतः स्थिते ॥ प्रत्यारंभं न कुर्वीत पापाविति निदर्शनम् ॥ ककारांते पदे पूर्वे सकारे परतः स्थिते ॥ खसवर्णं विजानीयात् भिखक्सेति निदर्शनम् ॥ तकारांते पदे पूर्वे चवर्गे परतः स्थिते ॥ मोक्षं तत्र च कुर्वीत यच्च पापौ निदर्शनम् ॥

ङकारांते पदे पूर्वे सकारे परतः स्थिते ॥ कसवर्णं विजानीयात्प्राङ्को
मेति निदर्शनम् ॥ टकारांते पदे पूर्वे सकारे परतः स्थिते ॥ टसवर्णं
विजानीयात्संम्राट् संभृतेति निदर्शनम् ॥ तकारांते पदे पूर्वे सकारे
परतः स्थिते ॥ छसवर्णं विजानीयात् तत्सवितुरिति निदर्शनम् ॥
नकारांते पदे पूर्वे सकारे परतः स्थिते ॥ तसवर्णं विजानीयात्रीन्त्समु
द्रेति निदर्शनम् ॥ पकारांते पदे पूर्वे शकारे परतः स्थिते ॥ छसवर्णं
विजानीयादनुष्टुप्छारदीति निदर्शनम् ॥ मकारांते पदे पूर्वे सवर्णे

परतः स्थिते ॥ मसवर्णं विजानीयादिमम्मेति निदर्शनम् ॥ वर्णे तु मात्रिके पूर्वे अनुस्वारो द्विमात्रकः ॥ द्विमात्रे मात्रिको ज्ञेयः संयोगाद्यस्य यो भवेत् ॥ अनुस्वारो द्विमात्रः स्याद्ध्वर्णव्यंजनादिगः ॥ ह्रस्वाद्वा यदि वा दीर्घाद्देवानाँहृदयेभ्य इति ॥ अनुस्वारस्योपरिष्टात्संवृतं यत्र दृश्यते ॥ दीर्घं तं तु विजानीयाच्छ्रोताग्रावाणेति निदर्शनम् ॥ अनुस्वारस्योपरिष्टात्संयोगो यत्र दृश्यते ॥ ह्रस्वं तं तु विजानीयात्सꣳस्थेति निदर्शनम्॥अनुस्वारश्च यो दीर्घादक्षराद्यो भवेत्परः॥

स तु ह्रस्व इति ज्ञेयो मंत्रेष्वेव विभाषया ॥ ओभावश्च विवृत्तिश्च
शषसा रेफ एव च॥ जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ यथा
भावप्रसंधानमुकारादिपरं पदम् ॥ स्वरांतं तादृशं विद्याद्यदन्यद्व्यक्तमू
ष्मणः ॥ उभावादुत्थितश्चोष्मा तां तु केलिं विनिर्दिशेत् ॥ विवृत्तं
प्रति या ऊष्मा विज्ञेया विकटानना ॥ लीढातिलीढविद्युच्च शषसेषु
प्रकीर्तिताः ॥ जिह्वामूले च रेफे च विज्ञेया विठकाशठा ॥ उपध्मा
नीयसहिता पुष्पिणीं तां विनिर्दिशेत्॥ अन्यत्र यो भवेदूष्मा सुलभां

तां विनिर्दिशेत् ॥ पादाद्यंतं पदाद्यंतं तथावग्रहकालिकम् ॥ ईषत्स्पृष्टं विजानीयात्तास्मिन्काले तु कारयेत् ॥ पादादौ च पदादौ च सयोगावग्रहेषु च ॥ यःशब्द इति विज्ञेयो योन्यः स य इति स्मृतः ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टं यथा विद्युत्पदच्छंदात्परं भवेत् ॥ त्वदर्थवाचिनौ वोवां वावेयादि निपातजौ ॥ आदेराजविकल्पार्था ईषत्स्पृष्टा इति स्मृताः ॥ विभाषयामेकारः स्यात्तथा नेतैःपदात्परः ॥ भवंतेत्यपि पूर्वैव तथा च सपदादपि ॥ यदेव लक्षणं यस्य वकारस्यापि

तद्भवेत् ॥ यत्र यत्र विशेषः स्यादिदानीं स स कथ्यते ॥ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः ॥ आदौ गुरुर्लघुर्मध्ये पदांते तु लघूत्तरः ॥ उपांशु त्वरितं चैव योधीते हृदि संज्ञकः ॥ अपि रूपसहस्रेषु स देहेषु प्रवर्तते ॥ पंचविद्यां न गृह्णंति जडाः स्तब्धाश्च ये नराः ॥ आलस्याश्चैव रोगाश्च येषां च विस्मृतं मनः ॥ अहिरिव गुणाद्भीतः संमानान्नरकादिव ॥ राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ न भोजनविलंबी स्यान्न च नारीनिबंधनः ॥ सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् ॥

तां विनिर्दिशेत् ॥ पादाद्यंतं पदाद्यंतं तथावग्रहकालिकम् ॥ ईषत्स्पृष्टं विजानीयात्तस्मिन्काले तु कारयेत् ॥ पादादौ च पदादौ च सयोगावग्रहेषु च ॥ यःशब्द इति विज्ञेयो योन्यः स य इति स्मृतः ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टं यथा विद्युत्पदच्छंदात्परं भवेत् ॥ त्वदर्थवाचिनौ वोवां वावेयादि निपातजौ ॥ आदेराजविकल्पार्थां ईषत्स्पृष्टा इति स्मृताः ॥ विभापयामेकारः स्यात्तथा नेतैःपदात्परः ॥ भवंतेत्यपि पूर्वैव तथा च सपदादपि ॥ यदेव लक्षणं यस्य वकारस्यापि

तद्भवेत् ॥ यत्र यत्र विशेषः स्यादिदानीं स स कथ्यते ॥ वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः ॥ आदौ गुरुर्लघुर्मध्ये पदांते तु लघूत्तरः ॥ उपांशु त्वरितं चैव योधीते हृदि संज्ञकः ॥ अपि रूपसहस्रेषु स देहेषु प्रवर्तते ॥ पंचविद्यां न गृह्णंति जडाः स्तब्धाश्च ये नराः ॥ आलस्याश्चैव रोगाश्च येषां च विस्मृतं मनः ॥ अहिरिव गुणाद्भीतः संमानान्नरकादिव ॥ राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ न भोजनविलंबी स्यान्न च नारीनिबंधनः ॥ सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् ॥

यथा खनन्खनित्रेण नरो वार्यधिगच्छति ॥ तथा गुरुगतां विद्यां शुश्रू
षुरधिगच्छति ॥ सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी चेत्त्यजेत्सुखम् ॥
सुखिनस्तु कुतो विद्या सुखं विद्यार्थिनः कुतः ॥ गुणिता शतशो विद्या
सहस्रावर्तिता पुनः ॥ आगमिष्यति जिह्वाग्रे स्थलं निम्नमिवोदकम् ॥
शतेन गुणिता विद्या सहस्रेण च तिष्ठति ॥ शतानां च सहस्रेण प्रत्यं
चदवतिष्ठति ॥ जलमभ्यासयोगेन शिलायाः कुरुते क्षयम् ॥ कर्का
र्णाम्मृदुतस्तस्य किमभ्यासान्न साध्यते ॥ गुरुशुश्रूषया विद्या पुष्क

ळेन धनेन वा ॥ अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ॥ शुश्रूषा
रहिता विद्या ह्यल्पमेधागुणैः सह ॥ वंध्या च यौवनी तस्य न विद्या
फलिनी भवेत् ॥ हयानामिव जात्यानामर्धमात्रार्द्धशायिनाम् ॥ न
हि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥ यथा ॥ पिपीलिकाभिः
२ पांसुभिर्वल्मीकं क्रियते महत् ॥ न तत्र बलसामर्थ्यमुद्यमस्तत्र कारण
म् ॥ अंजनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् ॥ अवंध्यं दिवसं कुर्या
द्दानाध्ययनकर्मसु ॥ अन्नव्यंजनयोर्भागस्तृतीयमुदकस्य च ॥ वायोः

संचारणार्थाय चतुर्थमुपकल्पयेत् ॥ हकारं पंचमैर्युक्तमंतस्थैश्चापि
संयुतम् ॥ औरसं तं विजानीयात्कंठ्यमाहुरसंयुतम् ॥ हकारो यत्र
पूर्वस्थो अंतस्थाद्यो भवेत्परः ॥ पदकाले वियुज्येत संहितायां स औ
रसः ॥ मेघदुंदुभिनिर्घोषो ज्ञायते पयसो ह्रदात् ॥ एवं नादं प्रयो
क्तव्यं सिंहस्य रुदितं यथा ॥ मासे भाद्रपदे मेघाः शब्दं कुर्वंति यादृ
शम् ॥ एवं गह्वरमासाद्य शुक्रं दुदुह्रेति दर्शनम् ॥ शेषाणां वानरा ॥ २० ॥
युद्धमुत्पतंति पतंति च ॥ एवं वर्णाः प्रयोक्तव्या इहेहैपान्निदर्शनम् ॥

यथा पुत्रवती स्नेहाच्चुंबते निजमौरसम् ॥ एवं वर्णाः प्रयोक्तव्या युञ्जाने
ति निदर्शनम् ॥ दुर्दरो जयदेशो च प्रफतेपुर्नयाप्यया ॥ एवं वर्णाः प्रयो
क्तव्या अपांफेनेति निदर्शनम् ॥ यथा भारभराक्रांता निश्वसंति नरा
भुवि ॥ एवं वर्णाः प्रयोक्तव्या अब्धः संभृतं इत्यपि ॥ कुक्कुटः काम
लुब्धश्च ककारद्वयमुच्चरेत् ॥ एवं वर्णाः प्रयोक्तव्याः कुक्कुटोसीति दर्श
नम् ॥ वडवा च हयं दृष्ट्वा योनिं विकुरुते यथा ॥ एवं वर्णाः प्रयो
क्तव्याः सदुंदुभेति दर्शनम् ॥ रंगे चैव समुत्पन्ने नोग्रसेत्पूर्वमक्षरम् ॥

संचारणार्थाय चतुर्थमुपकल्पयेत् ॥ हकारं पंचमैर्युक्तमंतस्थैश्चापि संयुतम् ॥ औरसं तं विजानीयात्कंठ्यमाहुरसंयुतम् ॥ हकारो यत्र पूर्वस्थो अंतस्थाद्यो भवेत्परः ॥ पदकाले वियुज्येत संहितायां स औरसः ॥ मेघदुंदुभिनिर्घोषो ज्ञायते पयसो ह्रदात् ॥ एवं नादं प्रयोक्तव्यं सिंहस्य रुदितं यथा ॥ मासे भाद्रपदे मेघाः शब्दं कुर्वंति यादृशम् ॥ एवं गह्वरमासाद्य शुक्रं दुदुहेति दर्शनम् ॥ शेषाणां वानरा युद्धमुत्पतंति पतंति च ॥ एवं वर्णाः प्रयोक्तव्या इहेहैषान्निदर्शनम् ॥

यथा पुत्रवती स्नेहाच्चुंबते निजमौरसम् ॥ एवं वर्णाः प्रयोक्तव्या युञ्जानेति निदर्शनम् ॥ दुर्दरो जयदेशे च प्रफतेषुर्नयाप्यया ॥ एवं वर्णाः प्रयोक्तव्या अपांफेनेति निदर्शनम् ॥ यथा भारभराक्रांता निश्वसंति नरा भुवि ॥ एवं वर्णाः प्रयोक्तव्या अभ्यः संभृत इत्यपि ॥ कुक्कुटः कामलुब्धश्च ककारद्वयमुच्चरेत् ॥ एवं वर्णाः प्रयोक्तव्याः कुक्कुटोसीति दर्शनम् ॥ वडवा च हयं दृष्ट्वा योनिं विकुरुते यथा ॥ एवं वर्णाः प्रयोक्तव्याः सदुंदुभेति दर्शनम् ॥ रंगे चैव समुत्पन्ने नोग्रसेत्पूर्वमक्षरम् ॥

छुश्म पत्रवती स्नेहाच्चुंबते निजमौरसम् ॥ एवं वर्णाः प्रयोक्तव्या युञ्जाने
न्स्यान्निदर्शनम् ॥ यथा देशे च प्रफतेपुर्नयाप्ययया ॥ एवं वर्णाः प्रयो
भीता पतनभेदाभ्यां तद्वद्वर्ण्म् ॥ यथा भारभराक्रांता निश्वसंति नरा
चापि न पीडितम् ॥ स नाथ अश्वः संभृत इत्यपि ॥ कुक्कुटः काम
सुमत्तो नागेंद्रः पदात्पदं ॥ एवं वर्णाः प्रयोक्तव्याः कुक्कुटोसीति दर्श
पृथक् पृथक् ॥ गीती शीघ्रा योनिं विकुरुते यथा ॥ एवं वर्णाः प्रयो
ज्ञोऽल्पकंठश्च षडेते पदम् ॥ रंगे चैव समुत्पन्ने नोग्रसेत्पूर्वमक्षरम् ॥

दस्तु सुस्वरः ॥ धैर्यं लयसमत्वं च षडेते पाठका गुणाः ॥ चतुरक्षर पदं च निवर्तेत पुनः पुनः ॥ आवर्तते पदं यच्च द्वित्रिराम्रेडितं हि तत् ॥ यथा धाम्ने धाम्नेति यजुषे यजुषेति निदर्शनम् ॥ हीयते वर्धते चापि पदं यत्त कृशोदरम् ॥ उपचारः स विज्ञेय उभे सुश्चंद्रेति निदर्शनम् ॥ ॥ अथ सप्तविधाः संयोगापिंडाः ॥ ॥ अयःपिंडो दारु पिंड ऊर्णापिंडो ज्वालापिंडो मृत्पिडो वायुपिंडो वज्रपिंडश्चेति ॥ य मान्विद्यादयःपिंडान्सांतस्थं दारुपिंडवत् ॥ अंतस्थं यमवर्जं तु ऊर्णा

पिंडं विनिर्दिशेत् ॥ अंतस्थं यमसंयोगे विशेषो नोपलभ्यते ॥ अश
रीरं यमं विंद्यादंतस्थः पिंडनायकम् ॥ ज्वालापिंडान्सनासिक्यान्सा
नुस्वारांस्तु मृन्मयान् ॥ सोमध्मा वायुपिंडाश्च जिह्वामूले तु वज्रि
णः ॥ अयःपिंडोनाम यथा ॥ अग्नीः पक्तीः नातनच्मि ॥ दारुपिंडो
नाम यथा ॥ अश्वः सूर्यः विभ्राजतीतिभवति ॥ तत्रऊर्णापिंडोनाम
यथा ॥ अस्मिन् इत्यस्मिन् अमुष्मिन् इतिभवति ॥ तत्रज्वालापिंडो
नामयथा ॥ ब्रह्मावद्भिः गृह्णामीति भवति ॥ तत्र मृत्पिंडोनामयथा ॥

साꣳस्थासꣳस्कर्त्तारः सꣳस्वर्तइति ॥ तत्र वायुपिंडोनामयथा ॥ देव सवितः । युञ्जानःप्रथमम् । प्रादिवः ककुत्सुसमितिभवति ॥ तत्रवज्र पिंडोनामयथा ॥ इष्कृतिःनिष्कृतिः ॥ ऋक्सामइति भवति ॥ प्रथम मेव पकारेण सकारेणैव संयुतं ॥ एतत्स्वरं समासाद्य अग्निष्वात्तान्नि दर्शनम् ॥ प्रथमेन ठकारेण थकारेणैव संयुतम् ॥ एतत्स्वरं समासाद्य अधिष्ठाननिदर्शनम् ॥ प्रथममेव णकारेण नकारेणैव संयुतम् ॥ एत त्स्वरं समासाद्य त्रिणवत्रयस्त्रिꣳशाविति निदर्शनम् ॥ प्रथममेव रंगेण

नकारेणैव संयुतम् ॥ एतद्वज्ञितमासाद्य वृष्टिमानिति निदर्शनम् ॥
एते ककारादयो मकारपर्यवसानाः कृष्णा व्याख्याताः शनैश्चरदैव
त्याः ॥ चत्वार्यन्तस्था यरलवाः कपिलवर्णा अग्निदैवत्याः ॥ चत्वार्यू
ष्माणः शषसहा अरुणवर्णा आदित्यदैवत्याः ॥ त्रयस्त्रिंशद्व्यंजनानि
स्पर्शा अंतस्था ऊष्माणश्चेति ॥ चतुर्विधं करणम् स्पृष्टमस्पृष्टं संवृतं
विवृतं चेति ॥ संवृतो घोषा विवृता अघोषाः ॥ विंशतिर्घोषास्ते गज
डदबा घझढधभा ङञणनमाः यरलवाश्चेति ॥ त्रयोदश अघोषास्ते

कचटतपाः खछठथफाः शषसाश्चेति ॥ अष्टौ वर्णस्थानानि भवंति ॥ उरःकंठ्यमूर्द्धन्यतालुदंत्यजिह्वामूलयमानुनासिक्याश्चेति ॥ द्वौ औरस्यौ हहा इति । अआआ ३ त्रयः कंठ्याः ॥ ऋषट्मूर्द्धन्याः टठडढ णष इति ॥ दश तालव्याः चछजझञयशइईई ३ इति ॥ अष्ट दंत्याः तथदधनलऌसाः ॥ एकादश ओष्ठ्याः पफबभमाउऊऊ ३ ॡउपध्माचेत्यादयः ॥ एकोदंतमूलीयोरेफः ॥ जिह्वामूलीयाः पंच कुंखुंगुंघुंङुंइति ॥ क्मख्मग्मघ्मकुंखुंगुंघुंइतियमाश्चत्वारः ॥

रुक्मेति प्रथमो ज्ञेयः सकृइत्यपरो भवेत् ॥ तृतीयः सध्नइत्याहुः उप
ध्मेति चतुर्थकः ॥ प्रथमौ चौष्ठनासिक्यौ ॥ द्वितीयः कंठ्यदंत्यश्च
नासामूलमुपाश्रितः ॥ तृतीयः कंठ्य जिह्वाग्रे नासायामेव निर्दि
शेत् ॥ चतुर्थो हृदि नासिक्यः कंठे चाभिहिता यमाः ॥ आपंचमे
श्चैकपादः संयुक्तं पंचमाक्षरम् ॥ यमास्तत्र निवर्तन्ते श्मशानादिव
बांधवाः ॥ यत्किंचिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ॥ सर्वमत्र प्रति
ष्ठितमिति ॥ ऋवर्णेतित्परे सादावनुस्वारो द्विमात्रकः ॥ संयोगे परभू

तेषु ह्रस्व एवोच्यते बुधैः ॥ इति श्रीयाज्ञवल्क्यशिक्षासमाप्ता ॥ ॥

॥ अथ प्रतिज्ञासूत्रम् ॥

॥ श्रीगणेशायनमः ॥ अथ प्रतिज्ञामन्त्रब्राह्मणयोर्वेदनामधेयं तस्मि
न्छुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया ह्यनुदात्तो
मूर्ध्न्युदात्तः श्रुतिमूले स्वरितः एवं जात्यादयोभिहिताः ब्राह्मणे तूदा
त्तानुदात्तौ भाषिकस्वारौ तानस्वराणि छन्दोवत्सूत्राणि ॥ १ ॥ अथा
न्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापिरेफोष्मा

न्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चार
णं द्विर्भावेप्येवमथापरांतस्थास्यायुक्तान्यहलसंयुक्तस्योष्मऽऋकारैरे
कारसहितोच्चारणमेवं तृतीयांतस्थस्य क्वचिद्दकारस्य तु संयुक्तासंयु
क्तस्याविशेषेण सर्वत्रैवमथान्त्यस्यान्तस्थानां पदादिमध्यान्तस्थस्य
त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणमथो मूर्द्धन्योष्मणोऽसंयुक्त
स्य टुस्मृते संयुक्तस्य च खकारोच्चारणमध्ययनादिकर्मस्वर्थवेलायां प्र
कृत्या ॥ २ ॥ अथानुस्वारस्य६ इत्यादेशः शषसहरेफेषु तस्य त्रैविध्य

माख्यातम् ॥ ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः परसवर्णेपत्प्रकृत्या चान्यत्र विसर्गेष्वीपद्विरामः पदाद्यस्य संयुक्ताकारस्येपद्दीर्घता च भवतीति ॥ ३ ॥ इति कात्यायनपरिशिष्टप्रतिज्ञासूत्रं समाप्तम् ॥ ॥ ॥ ॥

॥ अथ सर्वानुक्रमसूत्रम् ॥

श्रीगणेशायनमः ॥ ॐमंडलं दक्षिणमाक्षिहृदयं चाधिष्ठितं येन शुक्लानि यजूंषि भगवान्याज्ञवल्क्यो यतः प्राप तं विवस्वंतं त्रयीमयम

र्चिष्मंतमभिध्याय माध्यंदिनीये वाजसनेयके यजुर्वेदाम्नाये सर्वे स
खिले सशुक्रियऋषिदैवतछंदांस्यनुक्रमिष्यामो यजुषामनियताक्ष
रत्वादेकेषां छंदो न विद्यते द्रष्टारो ऋषयः स्मर्तारः परमेष्ठ्यादयो दे
वता मंत्रांतर्भूताध्यादिकाहविर्भाजः स्तुतिभाजो वानः शाखोखाश्र
स्योपवेषकपालेध्मोलूखलादयश्च प्रतिमाभूताश्छंदांसिगायत्र्यादी
न्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य
ब्रह्म निर्वीर्यं यातयामं भवत्यथातराश्वगर्त्तंवा पद्यते स्थाणुं वर्च्छति

प्रमीयते वा पापीयान्भवत्यथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते ॥ १ ॥ इषेत्वादि खंब्रह्मांतं विवस्वानपश्यत्ततः प्रतिकर्मविभागेन ब्राह्मणानुसारेण ऋषयो वेदितव्याः परमेष्ठी प्राजापत्यो दर्शपूर्णमास मंत्राणामृषिर्देवा वा प्राजापत्या इषेत्वाशाखानुष्टुब्विनियोगः कल्प कारोक्त एवमूर्ज्जेत्वा वायवो वायव्यं देवोव ऐंद्रं यजमानस्य शाखाव सोर्वायव्यं द्यौर्मातरिश्वन उखा वसोर्वायव्यं देवस्त्वापयः कामधुक्षः

प्रश्नः सा विश्वायुस्त्रीणि गव्यानींद्रस्यैद्रं विष्णोः पयः ॥ २ ॥ यो अग्न इदमाग्नेये कस्त्वा प्राजापत्यं कर्मणे स्रुक्शूर्पं प्रत्युष्टं द्वे राक्षसे उरु ब्रह्मरक्षोघ्नꣳ सर्वत्र धूरसि धूर्देवानां विष्णुस्त्वानऽउरुहविष्याऽअपह तꣳरक्षोयच्छंताꣳहविष्या देवस्यत्वा सावित्रꣳसर्वत्राग्नेये लिंगोक्ते भूताय त्वा हविः स्वः सूर्यो दृꣳहंतां गृहाः पृथिव्यास्त्वा हव्यं पवित्रे लिंगोक्तꣳसवितुर्देवीः प्रोक्षिता आपान्यग्नये लिंगोक्ते दैव्याय पात्राणि ॥ ३ ॥ शर्मास्यदित्याः कृष्णाजिनमवधूतꣳ राक्षसमद्रिग्रावोलूखले

अग्नेर्हविर्बृहत्स इमम्मौसले हविष्कृदाधिदैवतं वागाधियज्ञं पत्नी कुक्कु
टो वाग्वर्षवृद्धꣳशूर्पं प्रतित्वा हविः परापूतमपहतꣳराक्षसे वायुर्वो देवो
वस्तंडुला धृष्टिरुपवेषोपाग्न आदेवयजनमाग्नेये ध्रुवमसि षण्णां कपा
लान्यग्ने ब्रह्माग्नेयं धिषणासि दार्षदंदिवः शम्या धिषवणोपलं धान्यम
सिषण्णाꣳहविर्महीनामाज्यम॥४॥संवपामि हविः समाप आपं जन
यत्यै त्वेदꣳहविरिषेत्वाज्यं घर्मोसि षण्णां पुरोडाशस्त्रिताय त्रयाणां
त्रितोद्धितः क्रमेणादद इंद्रस्य स्फ्यः पृथिवी वेदिर्व्रजं पुरीषं वर्षतु वे

दिर्वधानसावित्रमपाररूमररो आसुरे द्रप्सस्ते वेदिर्गायत्रेण त्रीणि वैष्ण
वानि सूक्ष्मा त्रयाणां वेदिः पुराघशꣳसोपश्यच्चांद्रमसी त्रिष्टुभं प्रो
क्षणीः प्रैषो द्विषतः आभिचारिकमनिशितः स्रुवो निशितास्रुगदित्यै
विष्णोर्यौक्रमूर्जं त्रयाणामाज्यꣳसवितुरार्षं तेजोसिधामाज्यं ॥ ५ ॥
इति० संहितायां प्रथमोऽध्यायः ॥ कृष्णोसीध्मो वेदिर्बर्हिर्लिंगोक्ते अ
दित्या आपं विष्णोः प्रास्तरमूर्णम्रदसं वेदिर्भुवपतये त्रीण्याग्नेयानि
गंधर्वस्त्रयाणां परिधयो वीतिहोत्रं विश्वावसुराग्नेयीं गायत्रीꣳसमि

